(२७) [अथ हिङ्ग्वाद्यं[1]चूर्णम्]

हिङ्गुग्रन्थिकधान्यजीरकव[2]चा,
चव्[3]याग्निपाठाशटी,
वृक्षाम्लं लवणत्रयं त्रिकटुकं
क्षारद्वयं दाडिमम्।
पथ्यापुष्करवे[4]तसाम्ल–हपुषा[5] योज्यं तदेभिः कृतं,
चूर्णं भावितमेतदा[6]र्द्रकरसैः स्याद्बीजपूरस्य च ।। १०४ ।।

आध्मानग्रहणीविकारगुद[7]जान् गुल्मानुदावर्तकान्,
प्रत्या[8]ध्मानगदं तथाऽश्मरि[8]युतं तू[9]निद्वयारोचकान्।
ऊरुस्त[10]म्भमतिभ्रमं च म[11]नसो बाधिर्यमष्ठीलिकां
प्रत्यष्ठीलिकि[12]कामथापहरते प्रा[13]क्पीतमुष्णाम्बुना ।। १०५ ।।

हृ[14]त्कुक्षिवङ्क्षण–कटी–जठरान्तरेषु,
बस्तिस्तनांसफ[15]लकेषु च पार्श्वयोश्च।
शू[16]लानि नाशयति वातबलासजा[16]नि,
हिङ्ग्वाद्यमुक्त[17]मिदमाश्विनसंहितायाम् ।। १०६ ।।

टीका:— हींग, पीपलामूल, धाणा, जीरो, वच, चविक, चित्रक, पाठ, सठि, आमलवेतस, सिंधव–सौंचल–विडलूंण, सूंठि, मिरच, पीपरी, जवखार साजी, दाडिमसार, हरडै री छालि, पुष्करमूल, बांस री छालि? (तिन्तिडीक?) हौइ? (हाऊबेर), उषध सममात्र करि वांटि छाणि

---

1 क. बृहद्हिङ्ग्ष्टक? चूर्णः 2 ग. नि. दीप्यकवचा, क. जीरककणा, भा. प्र., यो. र. च 'जीरकवचा' 3 क. चव्यावचाग्निपाठासटी इति भ्रष्टपाठः (छन्दोभङ्गः) 4 क वेतसं सहपुष्पं 5 क. संयोज्ययर्भिकृतं ?, ग. नि. यो. र. च 'हपुषाजाज्यस्तदेभिः भा. प्र. हपुषायोज्यं 6 क. माद्रकस्वरसकैः 7 क. गुदणुल्मानुवर्तकं ? 8. क. प्रत्याध्यान् गलोदरात्रमरिहरं ? ग. नि. प्रत्याध्मानगरोदराश्मरिरुजस् 9 क. तनिद्वय 10 क. उरुस्तंनभमति 11 क. मानसां 12 ग. नि. प्रत्यष्ठीलिकया सहापहरति क. प्रत्यांष्टीलसहोदरानितिप्रभा ? 13 क. प्राक्यांत मुस्तांवचः ? 14 ग. नि. रुक्कुक्षि, क नाह्लित्कुक्षि वक्षण 15 क. तनांसकलेषु च च सूलमुग्र. 16-16 क. शोथन्विताशयति वातवलसजांश्च 17 क. माद्यमिदमिश्रीतसंहितायां।

आदा रस री भावना ३ बिजोरा रस री भावना ३ दीजै । पछ उषध टां २।। नित्य लीजे । आफरो, संग्रहणी, गुदरोग, गुल्म, उदावर्त, बीजा ही पाठ मांहे कह्या छै सो रोग जाई ।।

---

पाठान्तरम् वृ. यो. त. चक्र. च

हिङ्गूग्रगंधाविडविश्वकृष्णाकुष्ठाभयाचित्रकयावशूकम् ।
पिवेच्च सौवर्च्चलपुष्कराढ्यंय वाम्भसा शूलहृदामयघ्नम् ।।

वैद्यजीवने पाठान्तरम्:—

'हिङ्गुक्षारद्वय-सैन्धव-सौवर्चल-विड-पिप्पली,
अग्निकचित्रक-चव्य-मरिच-कुस्तुम्बरी—बर्बरी —
तिन्तिडी-षड्ग्रन्थाऽजमोदाम्लवेतस-पुष्करमूल,
नागरकरञ्जजीरकहरीतकीवृकी-हपुषाभिः ।
विरचितं चूर्णमिदमश्मरी-हृदय-गलरोग—
विबन्धाध्मानहिक्का-वर्ध्मगुदजगुल्म-सकल-
शूल-प्लीह-पाण्डुश्वसन-कसन-दहन
सदनवदन-विरसताविरतये समर्थतरम् ।।

पाठान्तरम् च. सं, भै, र., बृ. यो. त., ग. नि.

'हिङ्गु त्रिकटुकं पाठां हवुषामभयां शटीम् ।
अजमोदाजगन्धे च तिन्तिडीकाम्लवेतसौ ।।
दाडिमं पुष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यं चैकत्रचूर्णयेत् ।।
चूर्णमेतत्प्रयोक्तव्यमनुपानेष्वनत्ययम् ।
प्राग्भुक्तमथवा पेयं मद्येनोष्णोदकेन वा ।।
पार्श्वहृद्बस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च शूले च गुदयोनिजे ।।
ग्रहण्यर्शोविकारेषु प्लीह्नि पाण्ड्वामयेऽरुचौ ।
उरो विबन्धे कासे च हिक्काश्वासे गलग्रहे ।।
भै. र. वृ. यो. त. च. 'भावितं मातुलुंगस्य चूर्णमेतद्रसेनवा ।
बहुशो गुटिकाः कार्याः कार्षिकाःस्युस्ततोऽधिका': इत्यधिकः पाठः ।।

सुश्रु. सं, र. र.

''हिङ्गु-त्रिकटु-वचाऽजमोदा-धान्याजगन्धा-दाडिम —
तिन्तिडीक-पाठा-चित्रक-यवक्षार-सैन्धव-बिड —
सौवर्चल-स्वर्जिका-पिप्पलींमूलाम्लवेतस-शटी—
पुष्करमूल-हपुषा-चव्याजाजी-पथ्यश्चूर्णयित्वा

(२८) [अथ सामु[1]द्रादिचूर्णम्]

सामुद्रं सैन्धवक्षा[2]रौ रुचकं रो[3]मकं बिड[4]म् ।
दन्ती लोहरजः किट्टं त्रिवृत् [5]सूरणकं समम् ।। १०७ ।।

दधिगोमूत्रप[6]यसा मन्दपावकपाचितम् ।
तद्यथाऽग्निबलं चूर्णं पिबेदु[7]ष्णेन वारिणा ।। १०८ ।।

जीर्णेऽ[8]जीर्णे तु भुञ्जीत मा[9]षादिकृत भोजनम् ।
नाभिशूलमु[10]रः शूलं गुल्म–प्लीह[11]भवं जयेत् ।। १०९ ।।

सर्वशूलहरं चूर्णं जठरानलदीपनम् ।
* परिणामजशूलस्य विशेषेणेदमौषधम् ।। * ११० ।।

---

मातुलुङ्गाम्लेन बहुशः परिभाव्याक्षमात्रां गुटिकां
कारयेत्, ततः प्रातरेकैकां वातविकारी भक्षयेत् ।
एष योगः कासश्वासगुल्मोदरारोचकहृद्रोगाध्मान—
पार्श्वोदरवस्तिशूलानाहमूत्रकृच्छ्रप्लीहार्शस्तूनी—
प्रतूनीरपहन्ति।।"
अ० हृ०
'हिङ्गुवचाविजयापशुगन्धा-दाडिमदीप्यकधान्यकपाठाः ।
पुष्करमूलशठीहपुषाग्निक्षारयुगत्रिपटुत्रिकटूनि ।।
साजाजिचव्यं सहतिन्तिडीकं सवेतसाम्लं विनिहन्ति चूर्णम् ।
हृत्पार्श्वबस्तित्रिकयोनिपायु-शूलानि वाय्वामकफोद्भवानि ।।
कृच्छ्रान् गुल्मान् वातविण्मूत्रसङ्गं कण्ठेबन्धं हृद्ग्रहंपाण्डुरोगम् ।
अन्नाश्रद्धाप्लीहदुर्नामहिध्मा-वर्ध्माध्मानश्वासकासाग्निसादान् ।।

1 क. समुद्रादिचूर्णं: 2 क., चक्र. च क्षारो 3 ग. नि. रामठं 4 वृ. वै. विलम् 5. क. तिमृत् सूरण 6 क. तोयैश्च 7 क. पिबेदुष्टोनुवारिणा 8 वृ. वै. जीर्णे तत्प्रति 9 ग. नि. 'मांसादिस्निग्धभोजनम्; यो. र., मै. र., बृ. यो. त, चक्र., वृ. वै. च 'मांसादिघृतसाधितम्' 10 क. मुरशूलं, बृ. यो. त., यो. र. च हृच्छूलं; मै. र. प्लीह; चक्र. वृ. वै. र. र. च-'यकृच्छूलं' 11 क. भवे; यो. र., च यत्; मै.र. यकृत्गुल्मकृतं च यत् + र.र. 'प्लीह' *-* क. 'परिणामशूलसंज्ञस्य अग्निसंदीपनं परम्' (छन्दो भङ्गः) । अस्मात् परं यो. र., बृ. यो. त., मै. र. च 'विद्रध्यष्ठी* लजं हन्ति कफवातोद्भवं तथा । * वृ. यो. त. विद्रध्यष्ठीलिकातङ्कं इति ।

टीका:— समुद्रलूंण, सीधो, साजी, जवाखार, सौंचल, विड, लवणमीठो (रोमक) दांतणी, सार, (लोहभस्म) थ (और) कांटी (मण्डूर). निशोथ, सूरण उसा (औषधियां) सममात्र करि टां २।।, पछै सगला चूर्ण थी चऊ-गुणो दही, दूध, गोमूत्र भेला कीजै, मदाग्नि पचाजै, भरका (सूखने पर) करि चूर्ण उष्ण पाणी सौं दीजै । अग्नि घणी थोडी देखीजै, वो (औ) षध घाट बाधि दीजै । जिसडो भोजन रूचे तिसड़ो जीमीजै । नाभिशूल, उरशूल, गुल्म, प्लीह, सर्वशूल,हरस (अर्श) उदर री अग्नि दीपई । परिसगम (परिणाम) शूल जाई ।

---

यो. र., वृ. यो. त. च पाठान्तरम्

'हिङ्ग्वम्लत्रिपटूग्रषट्कटुसटीवृक्षाम्लदीप्याम्लिका
पाठाजाज्यजगन्धमूलहपुसाद्विक्षारसारामयम् ।
हिघ्माध्मानविबन्धवर्ष्मकसनश्वासाग्निसादारुचि—
प्लीहार्शोखिलशूलगुल्मगलहृद्रोगाश्मपाण्डुप्रणुत् ।।

पाठान्तरम्—ग. नि.

"हिङ्ग्वग्निचव्यलवणत्रयवेतसाम्ल—
क्षारद्वयं त्रिकटुदाडिमतिन्तिडीकम् ।
सग्रन्थिकाग्निकशटीहपुषाजगन्धा —
पाठाभयाससितजीरकपुष्कराह्वम् ।।
सोग्रं सधान्यकमिति प्रविधायचूर्णं ।
भूयः प्लुतं हि फलमूलसुरारसेन ।
उष्णोदकादि—परिपीतमिदं निहन्ति
शूलानि गुल्मगुदजग्रहणीविकारान् ।

शा. पाठान्तरम् —

"हिङ्गु पाठाऽभया धान्यं दाडिमं चित्रकः शठी ।
अजमोदा त्रिकटुकं हपुषा चाम्लवेतसम् ।।
अजगन्धा तिन्तिडीकं जीरकं पौष्करं वचा ।
चव्यं क्षारद्वयं पञ्चलवणानि विचूर्णयेत् ।।

## (२९) [अथ चित्र[1]काद्यं चूर्णम्]

चित्रकः पिप्पलीमूलं पिप्पली गजपिप्पली ।
हिङ्गु पुष्करमूलञ्च दाडिमं कृष्णजीरकम् ।। १११ ।।

[2]विडं धान्यं च हपुषा शताह्वा हिङ्गुपत्रिका ।
चव्याम्लवेतसाजाजी[3]–बस्तगन्धा–शटी–वचाः[4] ।। ११२ ।।

तुम्बरुश्[5]चाजमोदा च य[6]वानी त्व[6]क् ससैन्ध[6]वम् ।
समभागानि सर्वाणि सर्वं[7]स्तुल्यं तु नागरम् ।। ११३ ।।

---

प्राग्भोजनस्य मध्ये वा चूर्णमेतत्प्रयोजयेत् ।
पिबेद्वाजीर्णमद्येन तक्रेणोष्णोदकेन वा ।।
गुल्मे वातकफोद्भूते विड्ग्रहेऽष्ठीलिकासु च ।
हृद्वस्तिपार्श्वशूलेषु शूले च गुदयोनिजे ।।
मूत्रकृच्छ्रे तथाऽऽनाहे पाण्डुरोगेऽरुचौ तथा ।
हिक्कायां यकृति प्लीह्नि श्वासे कासे गलग्रहे ।।
ग्रहण्यर्शोविकारेषु चूर्णमेतत्प्रशस्यते ।
भावितं मातुलुङ्गस्य बहुशः स्वरसेन वा ।
कुर्याच्च गुटिका बह्वीर्वातश्लेष्मामयापहाः ।।

पाठान्तरम् — चक्र.

'सामुद्रसौवर्चलसैंधवानि
क्षारं* यवानीमजमोदकञ्च ।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गु विडञ्चेति समानि कुर्यात् ।।
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वं कवलं प्रशस्तम् ।

* म. प्र. क्षारौ

1 क, चित्रकाद्यचूर्णः 2 ग. नि. 'विडङ्ग-हपुषा-धान्य 3 क. चाश्वगंधा (बस्तगन्धा—अजवाइन) 4 क. वचा 5 क. मजमोदा 6 क. जवानीत्वक, ग.नि यवानी रुचकं तथा (त्वक्-दालचीनी) 7 क. सर्वंतुल्यंनागरं (छन्दोभङ्गः)

सूक्ष्मचूर्णं त[1]तः कृत्वा मातुलु[2]ङ्गेन भा[3]वयेत् ।
ततो[4] बिडालपदकं पिबेदुष्णेन वारिणा ।। ११४ ।।

मद्येन म[5]स्तुना वापि यूषेनाथ रसेन वा ।
जयेत्सर्वाङ्गजं शूलं कोष्ठ[6]गं कुक्षिगं तथा ।। ११५ ।।

अर्शोज[7]ठरगुल्मघ्नं दीपनीयं विशे[8]षतः ।
चित्रकाद्य[9]मिदं चूर्णमामवातहरं परम् ।। ११६ ।।

टीका:— पीपलामूल, चित्रक, पीपलि, गजपीपलि, हिंगु, पुहकरमूल, दाडिमसार, कालोजी ड (श्याहजीरा) लूंण, धाणा, होंह (हपुषा), सोवा, हिंगु-पत्री, चविक, अम्ववेतस, जीरो, असगंधी, सठि, (वचा) तूंबरु, अज-मोद, अजवाइन, तज, सींधव, उषध सममात्र, उषधां थी बराबरि सूंठि घालीजै । पछै बिजोरा रा रस की भावना ३ दीजै । चूर्ण टां २।। उष्ण पाणी सुं लीजै भावे मठा सुं लीजै भावै (मद्य) मुषंस उ लीजै, भावै मांस रा रस सों लीजै । सगला ही अंगारी शूल जाई । हरस (अर्श), वात, गुल्म, दीपन, आमवात जाई ।।

(३०) [अथ सुण्ठ्यादिचू[10]र्णम् (पञ्चसमं चूर्णम्)

शुण्ठी हरीतकी कृष्णा त्रिवृत्सौवर्चलन्तथा ।
समभागानि सर्वाणि सू[11]क्ष्मचूर्णानि कारयेत् ।। ११७ ।।

ज्ञेयं पञ्चसमं चूर्णमेतच्छूलहरं परम् ।
आध्मानजठरार्शो[12]घ्नमाम[13]वातहरं परम् ।। ११८ ।।

---

1 क. तत्कृत्वा 2 क. मातुलिंगे 3 क. ततो वयेत् 4 ग. नि. ततः कर्षमितां मात्रां 5 क, मुस्तना 6 क. कोपं जंतुजं तथा 7 क. अर्शज्वरादिगुलमघ्न 8 क. विसेषतः 9 क. चित्रकादिमिदं

10 क. चूर्णः 11 क. सूक्षिम 12 क. जठरासौं 13 क. मानवात

पाठान्तरम् ग. नि.

'पथ्या-नागर-जीरकाख्यरुचकैः श्यामान्वितैः पञ्चभि—
श्चूर्णं पञ्चसमं समस्तगदहृत्कायाग्निसन्दीपनम् ।

टीकः— सुंठी, हरडै, पीपलि, निशोथ, सौंचल, उषध सममात्र वांटि टां II उन्हे पाणी सुं लीजै । आफरो, हरस (अर्श), आमवात, इतरा रोग जाई ।

(३१) [अथ विज[1]यचूर्णम्]

त्रिक[2]त्रयं वचा हिङ्गु पाठा क्षा[3]रो निशा[4]द्वयम् ।
चव्यतिक्ताकलिङ्गा[5]ग्नि-शता[6]ह्वालव[7]णानि च ।। ११९ ।।

ग्रन्थिबिल्वाजमोदाश्च ※गणोऽष्टाविंशतिर्मतः ।※
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।। १२० ।।

एरण्डतैलसंयुक्तं सदा लिह्या[8]त्ततो नरः ।
बिडालपदमात्रं च पिबेदुष्णेन वारिणा ।। १२१ ।।

श्वा[9]सं हन्यात्तथा [10]शोथमर्शांसि च[11] भगन्दरम् ।
हृच्छू[12]लं पार्श्वशूलं च बस्ति[13] शूलमरोचक[14]म् ।। १२२ ।।

[15]प्लीहाकासप्रमेहांश्च काम[16]लां पा[16]ण्डुरोगताम् ।
आम[17]वातमुदावर्त्तमन्त्रवृद्धिं गु[18]दक्रिमीन् ।। १२३ ।।

---

प्राणोत्साहविवर्धनं रुचिकरं गुल्मघ्नप्लीहापहं—
प्रत्याध्मान-गरादिरोगशमनं सामानिले पूजितम् ।।

1 क. अथविजदायादि नांम चूर्णः 2 क. कटुत्रियं 3 क. क्षारं, चक्र., भै. र., टो. च क्षार; ग. नि. क्षारो; भा. प्र. क्षारौ 4 क. निसा 5 भा. प्र. कलिङ्गानि 6 क. गजाह्वा; भा. प्र. शक्राह्वा; भै. र., ग. नि., टो. च 'शताह्वा' 6 क. लवर्णानि

※-※ 'गणोऽष्टाविंशतिर्मतः' अस्मिन् स्थाने क. ग्रन्थे 'त्रिफला जीरकद्वयम् । वैद्यविद्याप्रमाणोऽयं गणाष्टाविंशको मतः' इति पाठः । 8 क. लिह्याकृतौ 9 क. स्वाहं "श्वासं ⋯ भगन्दरम्" अस्मिन्स्थाने भा.प्र. 'हन्यादर्शांसि सर्वाणि श्वासशोषभगन्दरान्' इति पाठः; 10 टो, ग. नि. च 'शोष'; चक्र., भै. र. च 'कासं हन्यात् तथा शोथ⋯.' 11 क, मर्शासिश्च 12 क. उरशूलं 13 क. चास्थिशूलं; जक्र., भै. र., टो, भा. प्र. च 'वातगुल्मं तथोदरम्'; ग. नि. बस्तिशूलंमरोचकम् । 14 क. मरोचिका 15 क. प्लीहकासप्रमेहघ्नं टो. चक्र. भै र. भा, प्र. च 'हिवकांश्वासं (कासं) प्रमेहांश्च 16 भा. प्र. पाण्डुरोगं सकामलाम् 17 टो. 'आमामयमुदावर्तं; चक्र. आमान्वयमुदावर्तं; भै. र. आमाशयमुदावर्तं 18 क. वृद्धिमहागदां

हन्या[1]च्च ग्रह[2]णीरोगान् ये मया परि[3]कीर्तिताः ।
महाज्व[4]रोपसृष्टानां भूतोपह[5]तचेतसाम् ॥ १२४ ॥

अप्रजानां च नारीणां प्रजावर्धनमुत्त[6]मम् ।
विजयो नाम चूर्णोऽयं कृ[7]ष्णात्रेयेण पूजितः ॥ १२५ ॥

टीका:-- सुठि, मिरच, पीपली, (हरड़, बेहडा, आंवला, त्वग्, एला, पत्रक), वच, हींग, पाठा, जवखार, (साजीखार मूलपाठ में नहीं है किन्तु टीकाकार ने लिखा है) हलद, दारुहलद, चविक, कटुक, इन्द्रजव, चित्रक, गजपीपली, सीधोलूणं, सूंचल, विडलूंण, समुद्रलूंण, कचलूणं, पीपलामूल बीलगिर, अजमोद, हरड, बेहडा, आंवला, धवलो जीरा, कालोजीरौ (हरड से कालाजीरा तक संशोधित पाठ में नहीं है) उषध सममात्र चूर्ण टां २॥ एरण्ड रा तेलि सूं लीजै तथा उष्ण जल सूं लीजै । स्वास, सोफ, हरस (अर्श), भगंदर, जंघाशूल, पार्श्वशूल (जंघा के स्थान पर संशोधित पाठ में हृच्छूल है) गुदावर्त्ति (उदावर्त) अंडवृद्धि, मोटा रोग, मोटो मोटो ताव (अरोचक, बस्तिशूल, प्लीहा, कास, प्रमेह कामला पाण्डु, आमवात, गुदक्रिमि, ग्रहणी) भूतव्यंतर हरियो हुवे (भूतोपहतचेतस) इतरा रोग जाई । वयर जिका छोरु न जणती होइ सो पिण जणै ।

## (३२) [अथ अलम्बु[8]षाद्यं चूर्णम्]

अलम्बुषा–गोक्षु[9]रकं त्रिफलानागराऽमृताः[10] ।
यथोत्तरं ❀भागवृद्ध्या श्यामाचूर्णञ्च तत्समम् ॥ १२६ ॥

---

1-3 क. हन्या च गृहिणी रोगं चक्र. मै. र. भा. प्र. च., अन्ये च ग्रहणीदोषा भिषग्भिर्ये प्रकीर्त्तिताः' । टो. 'अनेन ग्रहणीदोषा भिषग्भिर्ये प्रकीर्त्तिताः' । टो. 'अनेन ग्रहणीञ्चदोषा ये मया परिकीर्तिताः, ग. नि. 'हन्याच्च ग्रहणीरोगान्' 4 क. महाज्वरोसृष्टानां 5 क. भूतोपहितचेतसम 6 अन्यसर्वेषु ग्रन्थेषु 'मेव च' । 7 क. कृष्णात्र्येण; ग. नि. सर्वव्याधिहरः परः ।

8 क. अथालम्बुषादिचूर्णं: 9 क. गोषुरकः; ग. नि. श्वदंष्ट्रा च 3 क. मृता
❀ "यथोत्तरं"अस्मात्परं क. ग्रन्थे 'निहन्त्याशु सशोथं पाण्डुरोगिणा' इत्येव पाठः किन्तु भा. प्र., ग. नि. आदिषु:—"भागवृद्‌ध्या ... वयं क्रमः". पाठोऽयमधिकमुपलभ्यते, पाठोऽयं क. ग्रन्थे नोपलभ्यते ।

पिबेन्मस्तुसुरातक्र – का[1]ञ्जिकोष्णोदकेन वा ।
[2]पीतं जयत्यामवातं सशोथं वातशोणितम् ।। * १२७ ।।

त्रिकजानूरुसंधिस्थं ज्वरारोचकनाशनम् । ×
पथ्याऽक्षधात्र्यस्त्रिफला भागवृद्धावयं क्रमः ।। + १२८ ।।

टीका:— मुण्डी टां १, कांटी टां २, हरड टां ३, (मूलग्रंथ में टीकाकार ने त्रिफला को व्युत्क्रमेण लिखा है), बेहड़ा टां ४, आँवला टां ५, सुंठी टां ६, गिलोईसत टां ७, निशोथ टां २८, समस्त वाँटि चर्ण कृत्वा टां २।। प्रमाण लीजं । अनोपान मठो गाइ रो दही रो, भावै मद भावे छाछि तथा मांस रो रस लेणो । आमवात बहिलौ जाई, सोजा सहित पांडु रोग जाइ ।

---

1 ग. नि. 'पयो मांसरसादिभिः' 2 यो. र, भा. प्र. च 'आमबातं जयत्याशु; ग. नि. आमवातं निहन्त्येतद् सशोषं....'

* 'पीतं ... वातशोणितम्' अस्माद् परं भा. प्र., ग. नि. च

"अलम्बुषाऽऽदिकं चूर्णं रोगानीकविनाशनम्" पाठोऽयं अधिकमुपलभ्यते ।

× 'त्रिकजानू....नाशनम्' पाठोऽयं भा. प्र. नोपलभ्यते ।

+ 'पथ्याऽक्ष....वयं क्रमः' पाठोऽयं चक्र., मै. र. च अधिकमुपलभ्यते ।

किन्तु पाठोऽयं भा. प्र. नोपलभ्यते । तत्र अस्मिन्स्थाने—
'हरीतक्यक्षधात्रीभिः प्रसिद्धा त्रिफला क्रमात् ।
प्रत्येकं तेन वा युञ्ज्याद्भागवृद्धि यथोत्तरम् ।। इति पाठः

पाठान्तरम्— चक्र., भा. प्र. वृ. वै., र. र. च

'अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारुकम् ।
पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम् ।।

त्रिफलां नागरञ्चैव श्लक्ष्णचूर्णानि कारयेत् ।
मस्त्वारनालतक्रेण पयो मांसरसेन वा ।।

आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम् ।
प्लीह-गुल्मोदरानाह.दुर्नामानि विनाशयेत् ।।

अग्निञ्च कुरुते दीप्तं तेजोवृद्धि बलं तथा ।
वातरोगाञ्जयत्येष सन्धिमज्जगतानपि ।।'

(३३) [अथ पटोलाद्यं[1]चूर्णम्]

पटोलं रज[2]नीं नि[3]म्बं बिडङ्गं त्रिफला[4]त्वचम् ।
काम्पि[5]ल्लको नीलि[6]नी च त्रिवृताञ्चेति चूर्णयेत् ।। १२९ ।।

षडा[7]द्यान् का[8]र्षिकानन्त्यांस्त्रीं[9]श्च द्वि–त्रि–चतुर्गुणान् ।
कृत्वा चूर्णमतो[10] मु[11]ष्टिं ग[12]वां मूत्रेण वै[13] पिबेत् ।। १३० ।।

विरक्तो जा[14]ङ्गलरसैरोदनं मृदु भोजयेत्[14] ।
[15]मण्ड पेयां च पीत्वा[15] वा सव्योषं षडहं पयः[16] ।। १३१ ।।

[17]शृतं पि[18]बेत्ततश्चूर्णं पिबेदे[19]वं पुनः पुनः ।
हन्ति [20]सर्वोदराण्येतच्चूर्णं[20] जातोदकान्य[21]पि ।। १३२ ।।
कामलां[22] पाण्डुरोगञ्च श्वयथुं चाप[23]कर्षति । ※

---

अन्य पाठान्तरम् भां. प्र.

'अलम्बुषा गोक्षुरकं मूलं वरुणकस्यच ।
गुडूची नागरञ्चेति समभागानि कारयेत् ।।
काञ्जिकेन तुतत्पेयं विडालपदमात्रकम् ।
आमवाते प्रवृद्धे च योगोऽयममृतोपमः ।।

अन्य पाठान्तरम् ग. नि

'अलम्बुषाऽमृता शुण्ठी चित्रकस्त्रिफला कणा ।
यावन्त्येतानि चूर्णानि वृद्धदारु च तत्समम् ।।
सूक्ष्मचूर्णीकृतान्सर्वान् स्वेच्छाहारविहारिणः ।
पिबतो मदिरातक्रकाञ्जिकोष्णोदकंर्जयेत् ।।
प्लोहानमामवातञ्च यकृत्पाण्डुविसूचिकाः ।
उक्तं काङ्कायनेनेदं चूर्णमग्निकरं परम् ।।'

1 क. अथ पटोलादिचूर्णः 2 क. रजनी 3 क. निंब 2-3 च सं, 'पटोलमूलरजनी 4 क. त्रिफला त्वच 5 क. कंघिल्लकं 6 क. नील नींब 7 क. षडाधा 8 क. त्वर्षिकातानां 9 क. स्त्री च 10 क. ततो 11 क. मूंत्र 12 क. गवा 13 क. पावयेत् 14 14 क. जां जांगलरसैः रोदनं मृदु भोजयेत्; च. सं. मृदु मुञ्जीत भोजनं जाङ्गलैः रसैः; चक्र जाङ्गलरसैर्भुञ्जीत मृदुमोदनम् ※, ※चर. सं. पाठान्तरेण मृदु ओदनम् । 15-15 क. मंड पेयं च पित्वा 16 क. पय 17 क. सृतं 18 पयस्ततश्चर्च 19 क. षिवेदेयं 20-20 क. विसर्वोपधरण्यंतः छूंर्ण 21 क. नि. च 22 क. कामला 23 क. चापि ※ 'कामलां.....चापकर्षति' अस्मात्परं चरके 'पटोलाद्यमिदं चूर्णमुदरेषु प्रपूजितम्' इत्यधिकः पाठ ।

टीका:— (मूलग्रंथ में टीका नहीं मिलती अत: पाठानुसार टीका दी जा रही है ।) पटोल, रजनी, (हल्दी), नीम, चरकादि ग्रंथों में. पटोलमूल, हल्दी, बिडंग और त्रिफला ये आद्य छ द्रव्य

---

पाठान्तराणि—

(1) वृ. वै. अ. हृ. पृ. च

'पटोलमूलं त्रिफलां निशां वेल्लञ्च कार्षिकम् ।
कम्पिल्ल-नीलिनी-कुम्भभागान्द्वित्रिचतुर्गुणान् ।।
पिबेत्सञ्चूर्ण्य मूत्रेण पूर्वं पेयां ततो रसैः ।
विरिक्तो जाङ्गलैरद्यात्ततः षड्दिवसं पयः ।।
शृतं पिबेद्व्योषयुतं पीतमेवं पुनः पुनः ।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ।।'

(2) वृ. यो. त. "पटोलमूलं1 रजनीं विडङ्गं त्रिफलात्वचः ।
कम्पिल्लकं नीलिनीं च त्रिवृतां चेति चूर्णयेत् ।।
षडाद्यान्कार्षिकानन्त्यांस्त्रींश्च द्वि-त्रि-चतुर्गुणान् ।
कृत्वा-चूर्णं ततो मुष्टिं गवांमूत्रेण वा पिबेत् ।।
विरिक्तो2जांगलरसै रेचनं* मृदु भोजयेत्2 ।
मण्डं पेयां च पीत्वा वा सव्योषं षडहं पयः ।।
शृतं पिबेत्ततश्चूर्णं पिबेदेवं ततः पुनः ।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ।।
कामलां पाण्डुरोगञ्च श्वयथुं चापकर्षति ।।
"अत्र पटोलादेः षड्भागाः कार्षिका, अन्येषां
कम्पिल्लादीनां द्वि-त्रि-चतुर्गुणा भागा ग्रहणीयाः" ।।

1 यो. र. मिन्द्रं 2-2 यो. र. मृदु भुञ्जीत भोजनं जांगलै रसैः ।।
(मिन्द्रं—इन्द्रयवम्) *चक्र. भुञ्जीत

(3) ग. नि.

"मूलं पटोलस्य तथा रजन्यौ फलत्रिकञ्चेति समानि षट् च ।
स्यान्नीलिनी द्विस्त्रिगुणं विडङ्गं+कम्पिल्लकश्चापि चतुर्भिरंशैः ।।
त्रिवृत्तथा पञ्चगुणेति योगं चूर्णीकृतं मुष्टिमितं पिबेद्धि ।
कुष्ठेषु मूत्रेण तु रोहिणीनां श्वित्रे गरे वाऽथ हलीमके च ।।
जातोदकान्यप्युदराणि हन्यात् पाण्ड्वामयार्शः श्वयथुप्रमेहान् ।
एनं प्रयोगं प्रपिबंश्च कुष्ठी भुञ्ज्या-द्रसैर्धन्वमृगद्विजानाम् ।।

+ ग. नि. चूर्णाधिकारे 'विशालां' पठिता-(विशाला—इन्द्रायण इति लोके)

गिने गये है (विडंग व त्रिफला के बक्कल) प्रत्येक १–१ कर्ष, कमीला २ कर्ष, नीलीबीज ३ कर्ष, त्रिवृता ४ कर्ष, इनका चूर्ण करके एक मुष्टि प्रमाण (मुष्टि = पल) गोमूत्रानुपान से पीवे। जब इस चूर्ण से विरेचन हो जाय तब जाङ्गल पशुपक्षियों के मांस रस से नरम भोजन करें अथवा मण्ड और पेया पीकर ६ दिन तक त्रिकटुयुक्तक्वथित दूध पीवे व उसके पश्चात् पुनः चूर्ण लेवे। इस प्रकार तब तक बारंबार करता जाय जब तक कि उदररोग नष्ट न हो जाय। यह चूर्ण सभी उदररोगों को, चाहे वे जलयुक्त हों, नष्ट करता है। कामला पाण्डु रोग व शोथ में भी लाभप्रद है। (अधुना मात्रा १ से २ ग्राम ही पर्याप्त है।)

(३४) [अथ नारायणचूर्णम्[1]]

द्वौ क्षारौ लवणानि पञ्च हवुषाधान्याजगन्धाशटी–
व्योषाजाज्युपकुञ्चिकाक्रमिजितः[2] कङ्कुष्ठकुष्ठाग्नयः[3]।
उग्राग्रन्थिककारवीमिशि[4]युतं योज्यं फलानां[5] त्रयं
मूलं पुष्करजं यवान्यपि भवेदेतानि तुल्यान्यथ[6] ॥ १३३ ॥

त्रिवृद्विशाले[7] द्विगुणे[8] च दन्तिनी
त्रिसङ्गुणा[9] स्याद्यवतिक्तका भवेत्।
चतुर्गुणा, चूर्णमुदाहृतं[10] जनै–
रिदं हि नारायणमौषधं बुधैः ॥ १३४ ॥

---

(4) ग. नि.
'पटोलमूलधात्र्यक्षत्रायन्तीरजनीसमम्।
दन्त्यंशं बिडंगं कम्पिल्लं त्रिवृच्चापि चतुर्गुणा ॥
पथ्याष्टगुणितंचूर्णं पीतं दोषवलं प्रति।
क्षीराम्बुमूत्रैर्जठरप्लीहश्वयथुनाशनम्' ॥

चक्र. पादटि.
'विरेचनदिने जीर्णे भेषजे मृद्वोदन-मण्ड-पेयानामन्य–
तममग्निबलापेक्षयोपयोक्तव्यं, तत ऊर्ध्वं षडहं यथोक्त–
पयोवृत्तिना भवितव्यम्। ततः पुनः सप्तमेऽहनि पटोलादि–
चूर्णं पेयमिति शिवदासः'

1 क. नारायणचूर्णः 2 क. क्रमिजित् 3 क. कुष्टाग्नियः 4 क. मिसि 5 क. फलाना 6 क. यथा 7 क. विशालो 8 क. द्विगुणोथ 9 क. त्रिसंगुणास्या 10 क. मुदाहृतं

उष्णोदकेन यवको[1]लकुल[2]त्थतोयै—
स्तक्रेण मद्य—दधि—मस्तुसुरासवैर्वा[3] ।
नारायणं [4]प्रपिबतः सकलोदराणि
नश्यन्ति[5] विष्णुमिव दैत्यगणा द्विषन्तः[6] ।। १३५ ।।

---

पाठान्तरम्— च. सं. म. प्र. च

'यमानी हवुषा धान्यं त्रिफला चोपकुञ्चिका ।※
कारवी पिप्पलीमूलमजगन्धा शटी वचा ।।
7 शताह्वा× जीरकं 7 व्योषं स्वर्णक्षीरी सचित्रकम्
द्वौ क्षारौ पौष्करंमूलं + कुष्ठं लवणपञ्चकम् ।।
विडङ्गञ्च समांशानि दन्त्या भागत्रयन्तथा ।
8 त्रिवृद् विशालयोर्द्वौ 8 द्वौ शातला स्याच्चतुर्गुणा ।।
एतन्नारायणं नाम चूर्णं रोगगणापहम् ।

+ म. प्र. पिप्पलीमूलं (पुनरुक्तं)
नैतत्प्राप्यातिवर्तन्ते रोगा विष्णुमिवाऽसुराः ।।※
तक्रेणोदरिभिः पेयं गुल्मिभिर्बदराम्बुना ।
आनद्धवाते1 सुरया वातरोगे प्रसन्नया ।।
दधिमण्डेन विट् सङ्गे 10 दाडिमाम्बुभिरर्शसि ।
परिकर्ते सवृक्षाम्लमुष्णाम्बुभिरजीर्णके ।।
भगन्दरे पाण्डुरोगे श्वासेकासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ।।
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्ठन पेयमेतद्विरेचनम् ।।

× वृ. यो. त जीरके ※ अ. हृ वृ. वै. च शतपुष्पोपकुञ्चिका ।
7-7 वृ. वै. अ. हृ. चित्रकाजाजिकं
○ अ. हृ.; वृ. वै. च फलत्रयम्
8-8 ग. नि. द्विगुणे तु त्रिवृच्चित्रे

1 क. यवकोल 2 क. कुलद्ध 3 क. सुरा च सर्वैः 4 क. प्रावपिवतः 5 क. नस्यन्ति
6 क. द्विषन्तं

टीकाः— जवखार, साजीखार पांचोनमक, होंह (हवुषा), धणा, आसगंध, कचूर, त्रिगुडू (त्रिकटु), कालोजीरो, धवलो जीरो, बायबिडग, कंकोडा (कंकुष्ठ), कूठ, अरणी ? (चित्रक) वच, पीपलामूल, अजमोद (कारवी—अजमोदा इति चन्द्रटः) (मिसि) सोवा, त्रिफला, पुष्करमूल, अजमो, ए उषध सममात्र लीजै । निसोति, इन्द्रवारुणी उषधां थी बीमणी (दुगुनी) लीजै । सगला उबधा थी दांतिणी तिगुणी (३ भाग), कटुक चउगुणी (४ भाग) धालीजै । नारायण चूर्ण हूंती उदर विकार जाई । जिम कृष्णजी हुं ती दैत्य रा गण जाइ ।+

---

❀ चक्र. अहृ., वृ. वै., पा. 'नैनं प्राप्याभिवर्द्धन्ते । भा. प्र. म. प्र., बृ. यो. चि. 'एनत्प्राप्य निवर्तन्ते'

'नैतत्प्राप्या ...... मिवासुराः' पाठोऽयं यो. र. नोपलभ्यते

9 अ. हृ. वृ. वै. च आनाहवाते. ग. नि. सुरया बद्धवाते च 10 वृ. वै., म. प्र., भा. प्र. च वन्धे

अन्य पाठान्तरम् ग. नि.

'शतपुष्पावचाकुष्ठकारव्योऽजाजिधान्यकम् ।
द्वौ क्षारौ पिप्पलीमूलं यवानी कुञ्चिका शटी ।।
स्वर्णक्षीर्यजगन्धा च विशाला चित्रकः समम् ।
वृहद्दन्ती सप्तला च देया द्वि-त्रि-चतुर्गुणाः ।।
नारायणमिति ख्यातं चूर्णं श्रेष्ठं विरेचने ।
गुल्मानाहविषाजीर्णश्वासकासगलग्रहान् ।।
शोफार्शोग्रहणीदोषभगन्दरगदाञ्जयेत् ।।'

शा.

'चित्रकस्त्रिफला व्योषं जीरकं हपुषा वचा ।
यवानी पिप्पलीमूलं शतपुष्पाऽजगन्धिका ।।
अजमोदा शठी धान्यं विडङ्गं स्थूलजीरकम् ।
हेमाह्वा पौष्करं मूलं क्षारौ लवणपञ्चकम् ।।
कुष्ठं चेति समांशानि विशाला स्याद्द्विभागिका ।
त्रिवृत् त्रिभागा विज्ञेया दन्त्या भागेत्रयं भवेत् ।।

+ दि यह पाठ तीसटाचार्योक्त है । चरक में कङ्कुष्ठ के स्थान पर स्वर्णक्षीरी और यवतिक्ता (कटुक के स्थान पर कालमेघ उपयुक्त होगा) के स्थान पर सातला पढ़ा गया है ।)

(३५) [अथ पञ्चनिम्बचूर्णम्[1]]

पिचुमन्दफलं पुष्पं त्वक्प[2]त्रं मूलमेव च ।
पञ्चैतानि सुसूक्ष्माणि समचूर्णानि कारयेत् ।। १३६ ।।

अष्टभागावशेषेण[3] खदिरासनवारिणा ।
भावयित्वा तु संयोज्य द्रव्याण्येतानि दापयेत् ।। १३७ ।।

चित्रकोऽथ बिडङ्गानि व्याधिघातश्च शर्करा ।
भल्लातक[4]-हरीतक्यौ[5] शुण्ठ्यामलक[6]गोक्षुराः ।। १३८ ।।

चक्रमर्दकबाकुच्यौ पिप्पलीं मरिचं निशाम् ।
लोहचूर्णसमायुक्तं समभागं प्रमाणतः ।। १३९ ।।

भावयेद् भृङ्गराजेन पुनः शुष्काणि कारयेत् ।
निम्बार्धं ❀सर्वमेतेषामेकीकृत्य निधापयेत् ।। १४० ।।

बिडालपदमात्रान्तु[7] सर्पिषा पयसाऽपि वा ।
प्रातः प्रातर्निषेवेत[8] खदिरासनवारिणा ।। १४१ ।।

परिहारो न यत्राऽस्ति[9] पञ्चनिम्बेऽवतिष्ठति[10] ।
मासमात्रप्रयोगेण कुष्ठं हन्ति रसायनम् ।। १४२ ।।

त्वग्दोषं नीलिकां व्यङ्गं तथैव तिलकालकान् । +
सर्वव्याधिविनिर्मुक्तो जीवेद्वर्षशतं सुखी ।। १४३ ।।

---

चतुर्भागा शातला स्यात्सर्वाण्येकत्रचूर्णयेत् ।
पाचनस्नेहनाद्यैश्च स्निग्धकोष्ठस्य रोगिणः ।।

दद्याच्चूर्णं विरेकाय सर्वरोगप्रणाशनम् ।
हृद्रोगे पाण्डुरोगे च कासेश्वासे भगन्दरे ।।

1 क. चूर्णः 2 क. पत्रें 3 क. सेषेण 4 क. भलातक 5 क. हरीतक्यः 6 क. शुंठ्याम्लकगोक्षरां 7 क. मातँ ❀ बृ. यो. त. निम्बार्धचूर्ण 8 क. निषेवेत् 9 बृ. यो. त. चान्योऽस्ति 10 क. तिष्टति

+ 'त्वग्दोषं ˙˙ तिलकालकान्'-अस्मात् परं "अष्टादशविधं कुष्ठं सप्त चैव महाक्षयान्" इति पाठः यो. र., बृ. यो. त. च अधिकोपलभ्यते ।'

टीकाः— नींब पंचांग लीजै । जड, पान, छालि, मोर, फल, पांचे थोक (पांचो-द्रव्य) वांटि कपडिछाण कीजै । आ र माहे थोक पांच वराबरि करणी खयर रो छालि लेई न इहिमों आठ मउ पाणी रउरह इति वारै भावना ५ तथा ७ दीजै । पाठ मांही विगति कही नहीं छै । चित्रक, बायविडंग, किरमाली, साकर, भीलावां, हरड़, सूंठ, आंवला, कांटी, पमाड, बावचीमालवणी, पीपली, मिरच, हलद, लोहचूर्ण उषध सममात्र वांटि चूर्ण कीजै । चित्रकादि लोहचूर्ण अंत उसा सोलंहै छै । इयां नै भांगरा रा रस री भावना ५ तथा ७ दीजै । सूकई विन ई पछै चित्रकादि चूर्ण उसा १६? नींब रा थोक ५ हूं थी आधा भेलीजै। उषध

---

मन्दाऽग्नौ च ज्वरे कुष्ठे ग्रहण्यां च गलग्रहे ।
दद्याद्युक्तानुपानेन तथाऽऽध्माने सुरादिभिः ॥

गुल्मे बदरनीरेण विट्सङ्गे दधिमस्तुना ।
उष्णाम्बुभिरजीर्णे च वृक्षाम्लैः परिकीर्त्तिषु ॥

उष्ट्रीदुग्धेनोदरेषु तथा तक्रेण वा गवाम् ।ॐ
प्रसन्नया वातरोगे दाडिमाम्भोभिरर्शसि ॥

द्विविधे च विषे दद्याद् घृतेन विषनाशनम् ।
चूर्णं नारायणं नाम दुष्टरोगगणापहम् ॥

पाठान्तरम् चक्र.,

'पुष्पकाले च पुष्पाणि फलकाले फलानि च ।
सञ्चूर्ण्य +पिचुमन्दस्य ×त्वङ्मूलानि दलानि च ॥

द्विरंशानि समाहृत्य भागिकानि प्रकल्पयेत् ।
त्रिफलात्र्यूषणब्राह्मी-श्वदंष्ट्राऽरुष्कराग्निकाः ॥

विडंग सारवाराही-लोहचूर्णामृताः (क)समाः ।
हरिद्रा द्वयवागुत्री-व्याधिघाताः सशर्कराः ॥

कुष्ठेन्द्रयवपाठाश्च कृत्वा चूर्णं सुसंयुतम् ।
खदिराऽसननिम्बानां घनक्वाथेन भावयेत् ॥

सप्तधा पञ्चनिम्बन्तु मार्कवस्वरसेन तु ।
स्निग्धशुद्धतनुर्धीमान् योजयेच्च शुभे दिने ॥

+र. यो. सा., भा. प्र., र. र. च संग्रह्य, ×भा. प्र. मं. र., र. यो. सा., र. र. च पिचुमर्दस्य

टां २॥ तथा ३ लीजै घृत सूं भावे दूध सूं लेई ने इ उपरां खैर रा पाणी रा कुरला कीजै ? पथ्य भावै सो लीजै । मास १ सेवियो कोढ हरै । रसायन छई । चामडी रा दोष हरई । तिलकाला पिण सर्व व्याधि हरई । वर्ष ३०० ? जीवै ।

---

मधुना तिक्तहविषा खदिराऽसनवारिणा ।
लेह्यमुष्णाम्बुना वापि कोलवृद्ध्या पलं पिबेत् ॥
जीर्णे च भोजनं कार्यं स्निग्धं लघु हितञ्च यत् ॥*
विचर्चिकोदुम्बर-पुण्डरीक-कापालदद्रूकिटिमालसादि ।
शतारुविस्फोटविसर्प2पामा: कफप्रकोपं त्रिविधं किलासम् ॥
भगन्दरश्लीपदवातरक्त जाताान्ध्य3नाड़ीव्रणशीर्षरोगान् ।
सर्वान्प्रमेहान् प्रदरांश्च सर्वान् दंष्ट्राविषं मूलविषंनिहन्ति ॥
स्थूलोदर: सिंहकृशोदर:स्यात् सुश्लिष्टसन्धिर्मधुनोपयोगात ।
समो4पयोगादपि ये दशन्ति सर्पादयो यान्ति विनाशमाशु ॥
जीवेच्चिरं व्याधिजराविमुक्त: शुभे10—रतश्चन्द्रसमानकान्ति: ॥'

(क) र. यो. सा. 'लोहचूर्णं स्मृता:

1 भा. प्र., र. र., र. यो. सा. च 'निशाद्व्ययावल्गुजकं ; वृ. वै. 'निशाह्वया.....'
2 भा. प्र., र. र., र. यो. सा. च 'विसर्पमाला:'
3 भा. प्र., र. र., मै. र. र. यो. सा. च. 'जडान्ध', वृ. वै., निहन्ति
4 भा. प्र., र. यो. सा. च 'सदोपयोगा'

* 'जीर्णे च भोजनं... हितञ्चयत्' अस्मात् परं वृ. वै. 'आस्तिकेनाऽप्यकोपेन भाव्यं वै रोगिणा स्वयम्' इत्यधिक: पाठ:

ग. नि. पाठान्तरम् :

'रसायनं प्रवक्ष्यामि ब्रह्मणाऽमिततेजसा1 ।
प्रोक्तं2 यच्च्यवनादिभिरुपयुक्तं2 महर्षिभि: ॥
पुष्पकाले तु निम्बस्य कुसुमानि समाहरेत् ।
फलकाले फलञ्चैव मूलं पत्रं त्वचं तथा ॥
चित्रकोऽथ विडङ्गानि व्याधिघातकशक्रजौ ।
भल्लातको हरीतक्य: शुण्ठीं चामलकै: सह ॥
श्वदंष्ट्रा लोहचूर्णञ्च भृङ्गस्वरसभावितस् ।
अरिष्टखदिराभ्यांच भावयेत्पञ्चनिम्बकम् ॥
भावयित्वा पुन: पिष्टमेकस्थाने च कारयेत् ।
तत: कर्षमितां मात्रां सर्पिषा माक्षिकेन वा ॥

सुखाम्बुना वा तत्पीतं तत्क्षणादेव जीर्यति ।
हन्यात्कुष्ठानि सर्वाणि सप्तचैव महाक्षयान् ।।
अर्शांसि वातगुल्मं च खालित्यं पलितानि च ।
वातरक्तं विशेषेण श्वित्रं कुष्ठं तथैव च ।।
कुष्ठनाशनमेतद्धि ब्रह्मणा गदितं पुरा ।
वातातपसहो ह्येष न चात्र नियमः क्वचित् ।।
ग्राम्यधर्मं च कुर्वाणो भोजनं च यथेप्सितम् ।
मासमात्रोपयोगेन जीवेद्वर्षशतं पुमान् ।।
सर्वकामप्रसक्तोऽपि सर्वरोगैः प्रमुच्यते ।
षण्मासमुपयोगेन सर्पैरपि न दश्यते ।
वर्षमात्रोपयोगेन जीवेद्वर्षशतत्रयम् ।।
नास्मात्परममस्त्यन्यत्कुष्ठरोगस्य भेषजम् ।।
साध्यानि यानि कुष्ठानि तान्येवामुं प्रकुर्वतः ।
निवर्तन्ते तथा क्रुद्धे सौपर्णे पवनाशिनः ।।

1 र. यो. सा, भा प्र. च. 'ब्रह्मणायदुदाहृतम्'
2 र. यो. सा., भा. प्र. च. "मार्कण्डेयप्रभृतिभिर्यत्प्रयुक्त"

❀ भा. प्र. टि. आस्यायमर्थः :—
निम्बस्य पुष्प-फल-त्वक्पत्र-मूलानि सर्वाणि समुदितानि द्विगुणानि चूर्णितानि भृङ्गराज-स्वरसेन सप्तवारान् भावयेत् । त्रिफलाऽऽदीनि पाठाऽन्तानिसमुदिताऽन्येकभागानि चूर्णितानि खदिरासननिम्बक्वाथेन भावयेत् । ततः सर्वमेकीकृत्य मध्वादिनाऽवलिह्यात् ।।

(३६) [अथ शृङ्गयादिचूर्णम्[1]]

शृङ्गीकटुत्रिकफलत्रयकण्टकारी—
भार्ङ्गी[3] सपुष्करज*टालवणानि पञ्च ।
चूर्णं पिबेदशिशिरेण[4] जलेन हिक्का—
[5]श्वासोर्द्ध्ववातकसनाऽरुचिपीनसेषु[6] ॥४४॥

टीका:— काकड़ासींगी, त्रिगड (त्रिकटु), त्रिफला, बैठी रींगणी, भांडगी, पुहकरमूल सोधो, सोंचल, विडलूण, कचलूण, समुद्रलूण उषध सममात्रा चूर्ण करि उष्ण पाणी स्युं लीजै। हिडकी (हिक्का), श्वास, उर्धवात, कफ, अरुचि, पीनस इतरा रोग जाइ ॥

(३७) [अथ कृष्णादिगणचूर्णम्[7]]

कृष्णा–ग्रन्धिक[8]–चव्य–चित्रक–वचा*—
विश्वौषधाजाजिभिः[9],
पाठा–रामठ–रेणुका–मधुरसैः
सिद्धार्थतिक्तोषणैः[10] ।
द्रेका[11] शक्रयवाजमोदत्रुटिभि—
र्भार्ङ्गीविडंगान्वितैः[12]—

1 क. शृंगादि चूर्णः । 2 क. फलश्र 3 क भागी 4 क. पिबेंदसिरेण 5 क. स्वासोर्ध-वात 6 क. कफजारुचि; वृ. यो. त. कफमारुत ।

* वृ. वं. पुष्करजटी (जटी-जटामांसी)

7 क. कृष्णांदिगणचूर्णः 8 क. गंधिक 9 क. विश्वोषधोजातिमिः 10 क. सिधार्थतिक्तावणैः * चक्र. टि. तथा वृ. यो. त. वचा स्थाने विषा पठितः 11 वृ. यो त. 'उग्रा', क. द्रेकासक्रयवात्रुटिभिः 12 क. बिडंगान्वितः

रेभिर्दीप्तिकरः कफामयहरः
कृष्णाऽऽदिरुक्तो गणः ॥ १४५ ॥

ठीका:— पीपलि, पीपलामूल, चित्रक, चविक, वच, सूंठी, जीरो, पाठ, हींग, रेणुका, मूरवा (मधुरस) सरिसव, कटुक, मिरच, वकाइने, इन्द्रजव, अजमोद, इलायची, भाडंगी, वार्यविडग, उसा वराबरि करि चूर्ण कीजै। टां २।. लोजै, दीप्ति करै, कफवात हरै।

---

पाठान्तरम्– सु. सं. (सू. अ. 38)

पिप्पली-पिप्पलीमूल-चव्य-चित्रक-शृङ्गवेर-मरिच-हस्तिपिप्पली-हरेणुकैलाज-मोदेन्द्रयवपाठा-जीरक-सर्षपमहानिम्बफल-हिङ्गु-भार्गी-मधुरसातिविषावचा-विडङ्गानि कटुरोहिणी चेति—

पिप्पल्यादिः कफहरः प्रतिश्यायनिलारुचीः ।
निहन्याद्दीपनो गुल्म-शूलघ्नश्चामपाचकः ॥

पाठान्तरम् भै. र.

पिप्पली पिप्पलीमूलं मरिचं गजपिप्पली ।
नागरं चित्रकं चव्यं रेणुकैलाऽजमोदिका ॥
सर्षपो हिङ्गु भार्गी च पाठेन्द्रयवजीरकाः ।
महानिम्बं वचा मूर्वा विषा तिक्ता विडङ्गकम् ॥
पिप्पल्यादिगणो ह्येष कफमारुतनाशनः ।
गुल्म-शूलज्वरहरो दीपनस्त्वामपाचनः ॥

अन्य पाठान्तरम्

कृष्णा चित्रकषड्ग्रन्था वासकं विकसा घनम् ।
ग्रन्थिकैले चातिविषा रेणुकं च कटुत्रयम् ।
यमानी गोस्तनी व्याघ्री भूनिम्बं बिल्वचन्दनम् ।
भार्ङ्गी श्यामा शिवा धात्री स्थिरा मूर्वा सजीरका ॥
सर्षपं हिङ्गु कटुकी विडंगं च समांशकम् ।
एष कृष्णादिको नाम गणो ज्वरविनाशनः ॥

## (३८) अथ कृष्णाद्युद्धूलनम् चूर्णम्[1]

कृष्णा-सुपर्व[2]-विटपी[3]-सहनागरेण,
तिक्ता च दीपकयुता तनुलेपने[4] स्यात् ।
चूर्णं प्रशस्त[5]मतिजूर्तियुते शरीरे,
स्वेदं च शीतलतनुत्वमिदं निहन्ति ।।१४६।।

टीका:— पीपली[6], सुपर्व, विटपी, सूंठि, कुटक, अजमोद[7], एं उषध टां ५ कीजै । प्रस्वेद आवतौ होइ तो अंगलेप कीजै शांति होई ।।

## (३९) अथ सितोपलादिचूर्णम्※

सितोपला षोडश स्यादष्टौ स्याद्वंशरोचना ।
पिप्पली स्याच्चतुष्कर्षा ह्येला[8] च स्याद् द्विकार्षिका[9] ।।१४७।।
एक[10]: कर्षस्त्वच: कार्यश्चूर्ण-येत्सर्वमेकत: ।
सितोपलाऽऽदिकं चूर्णं मधुसर्पि[11]र्युतं लिहेत् ।।१४८।।
कासश्वासक्षयहरं हस्तपादाङ्गदाहजित् ।
मन्दाग्निं शुष्कजिह्वां[12] च पार्श्वशूलमरोचकम् ।।१४९।।
ज्वरमूर्ध्वगतं[13] रक्तपित्तमाशु व्यपोहति ।।१५०।।

टीका:— मिश्री टांक १६०, वंशलोचन टां ८०, पीपलि※ टां. ४०, इलायची※ टां. २०, तज※ टां १०, एकत्र करि घृत मधु स्युं चूर्ण टां २।। अवलेही लीजै । कास, श्वास, क्षय, अंग री बलणि (जलन), मंदाग्नि, जीभ सूकती, लोहु थूकतो होई, पांशुली शूल, अरुचि इतरा थोक जाइ ।।

---

1 क. कृश्णालघुरूलनं चूर्णं। (सन्निपातज्वरे स्वेदप्रवृत्तिहरमुद्धूलनम्) 2 सुपर्व = वंश:, अथवा दूर्वा; शतपर्वा = वचा 3 विटपी = वट: 4 क. लेपन 5 क. ßसस्तमिति जायते शरीरे 6 क. टीका. पिप्पली के वाद 'कलूंजी' और 'कुलछ' ये २ द्रव्य क्रमश: सुपर्व व विटपी के लिये मिलते हैं । 7 क. अजमोद के पश्चात् 4 द्रव्य क्रमात् (1) अजमौ (2) काइफल, (3) कौडी और (4) वच अधिक मिलते हैं । गे द्रव्य उपलब्ध मूलपाठ में नहीं हैं ।

※ अष्टाङ्गहृदये 'त्वगेलादि' इति नाम

8 क. स्याचतुकर्ष: मेला 9 क. स्याद्विकर्षिकं 10 क. एक वर्ष 11 क. सर्पिधुतं 12 शा., यो. र आदिषु 'सुप्तजिह्वत्वं' 13 क. ज्वरमूर्छागतं रक्त: पित । इस ग्रन्थ में टीकाकार ने मिश्री व वंशलोचन क्रमश: 160 टां व 80 टां लिखे हैं किन्तु पिप्पली 10 टांक, इलायची 5 टां व तज २।। टां लिखे हैं ।

## (४७) अथ न्यग्रोधादिचूर्णम्[1]

न्यग्रो[2]धोदुम्बराश्वथ[3] श्योनाकारग्वधा[4]ऽसनम् ।
आ[5]म्रं कपित्थं जम्बू[5]ञ्च प्रियालं[6] ककुभं धवम्[6] ।।१५१।।

[7]मधूकं मधुकं लोध्रं[7] वरुणं पारिभद्रकम् ।
[8]पटोलं मेषशृङ्गीं च दन्ती चित्रकमा[9]नकम् ।।१५२।।

करञ्जंत्रिफलाशक्र[10]-भल्लातकफलानि च ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।।१५३।।

लिह्यन्मधुसमं पश्चात् फलत्रयरसं पिबेत् ।
न्यग्रोधाद्यमिदं चूर्णं मूत्रकृच्छ्राणि यानि च ।।१५४।।

प्रशमं वातवेगेन पिड़िका न च जायते ।।१५५।।

टीकाः— बड रा फल, उवर (उदुम्बर), पीपल रा फल, अरलू री छालि, किरमाला री फली, कपित्थ [असना], आंब री गूठली, जांबू री गूठली (न्यग्रोधाद्यमिदन्त्वत्र चाम्रजम्ब्वस्थिगृह्यते), चारोली, अरजनरूख री छालि (अर्जुन), घव री छालि, महुवा, महुलोठी, लोद, वरणा री छाल, नींब रा पान, पटोल, मेढासींगी, दांतिणी, चित्रक, आरहडी (आढकी), करंजफल, त्रिफलाछालि. इद्रजव, भीलावां फल उषध सममात्रा करि मधु स्युं अवलेही लीजै उपरि त्रिफला रो पाणा पीजै । मूत्रकृच्छ्र सहि (सारे) जाई ।

---

1 क चूर्ण: 2 क. निग्रोधो 3 क. श्वछ 4 क. ग. नि. च. रग्वधाः समम्, र. र, चक्र., भा. प्र., वृ वै. व. यो. त., यो. र. च 'रग्वधाऽसनम्' 5-5 क. आम्र कपिछ जंबू 6 क. कपिपालककुवं धवं 7-7 क. मधुकं लोध्रं वरुणं पारिभाद्रकं 8 ग. नि. पलाशो, क. पटोले 9 क. मीढकां, यो. र. पाटली, बृ. यो. त. मानकम् 10 क. शक्व 11 क. चूर्णसूक्ष्मानि ॐ 'एतानि ······कारयेत्' अस्मात्परं 'लिह्यन्मधुसमं ······जायते स्थाने "न्यग्रोधाद्यमिदंचूर्णं मधुनासह लेहयेत् । फलत्रयरसं चानु पिबेन्मूत्रं विशुद्ध्यति । एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।। प्रशमं यान्ति योगेन पीडिका न च जायते ।।" इति. र. र., वृ. वै., बृ. यो. त,, चक्र. च पठितः ।

## (४१) अथ बृहदग्निमुखं चूर्णम्

द्वौ क्षारौ चित्रकं पाठा कर[1]ञ्जं लवणानि च ।
सूक्ष्मैला पत्र[2]कं भा[3]र्गी क्रिमिघ्नं[4] हिङ्गु पुष्करम् ।।१५६।।

[5]शटी दार्वी त्रिवृन्मु[6]स्तं वचा शक्रयवास्तथा ।
धात्रीजी[7]रकवृक्षाम्लं श्रेयसी चोपकुञ्चिका ।।१५७।।

अ[8]म्लवेतसमम्लीका [9]दाडिमं कटुकत्रिकम्[9] ।
भ[9]ल्लातकाजमोदे च[9] यवानी सुरदारु च ।।१५८।।

अ[10]भयाऽतिविषा श्यामा हवुषाऽऽरग्वधं समम् ।
तिलमु[12]ष्ककशिग्रूणां कोकिलाक्षपलासयोः※ ।।१५९।।

क्षाराणि लोह[13]किट्टं च तप्तं गोमूत्रसेचितम् ।
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ।।१६०।।

मातुलुङ्गरसेनैव भा[15]वयेच्च दिनत्रयम् ।
दिनत्रयं तु तक्रेण[14] आर्द्रकस्वरसेन च ।।१६१।।+

---

1 टो. करज्जो, ग. वि. विडङ्गं 2 क. चित्रकं (युनरुक्तं), चक्र. पत्रकं, ग. नि. तगरं 3 क. भागी 4 ग. नि. कारवी 5 र. यो. सा. शुण्ठी 6 क. मुस्तां 7 क. क्षीरक 8 क. आम्ल 9-9 र. र, टो., चक्र., भैं. र. भा. प्र., र. यो. सा. च 'दाडिमं कटुकत्रयम् ।·········भल्लातकाजमोदे च ।' पाठोऽयं नोपलभ्यते, किन्तु वृ. वै., ग नि. च पाठोऽयं विद्यते । 10 क- अभिया 11 ग. नि. चव्या 12. क. तिलपुष्फशिग्रुणां ※ 'तिलमुष्कक·······पलासयोः' अस्मात्परं वृ. वै. 'आसनार्कधवाश्वत्थतिन्तिडीकार्जुनस्य च । चणकस्य तथा क्षारं लोहकिट्टं च शोधितम्' इत्यधिकः पाठः । ग. नि. "क्षारा अमूनि तुल्यानि सूक्ष्मचूर्णानि कारयेत् । लोहकिट्टं च सप्ताहं तप्तं गोमूत्रसेचितम् ।। विद्वान् सुभावितं कृत्वा योगेऽस्मिन्प्रक्षिपेत्ततः ।।" इत्यन्य अधिकः पाठः 13 क. लोहकीटं 'क्षाराणि लोह··········सेचितम्' पाठोऽयं ग. नि, वृ. वै. च नोपलभ्यते । 14 चक्र. भा. प्र., भैं. र., म. प्र., र. यो. सा., र. र., ग. नि. च. शुक्तेन टो. चुक्रेण वृ. वै. शुक्लेन 15 टो. संघुट्य ※ क. क्षाराणि ··········सेचितम्' अस्मात् परं क. ग्रन्थे 'दिनत्रयं तु तक्रेण·······स्वरसेन च' तस्मात्परं 'अत्यग्निकारकं····समप्रभम्' -- अग्रे—"समभानि ····· कारयेत् ।" "मातुलिंगारसेनेदं'··········दिनत्रयम्" इति व्युत्क्रमेण पठितः ।

अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ।
उपयुक्तं विधानेन नाशयत्यचिरा[1]द्‌गदान् ।।१६२।।

अजीर्णकमथो[2] गुल्मान् प्लीहानं गुदजानि च ।※
समान[3] व्यञ्जनोपेतं[4] भ[5]क्तं दत्वा सुभाजने[5] ।।१६३।।

दापये[6]दस्य चूर्णस्य बिडालपदमात्रकम् ।
गोदोह[7]मात्रात् तत्सर्वं द्रवी भवति सोष्मकम् ।।१६४।।

---

1 क. चिरानगदान् 2 क. अजीर्णमयोगुल्मम्
※ 'अजीर्णकमथो..........गुदजानि च । अस्मात् परं म. प्र , भै. र., टी., भा. प्र., र. र., चक्र., वृ. वै. र. यो. सा. च :—
'उदराण्यन्त्रवृद्धिं च अष्ठीलां वातशोणितम् ।
'प्रणुदत्युल्बणान् रोगान् नष्टमग्निं प्रदीपयेत् ।।'
3 क. सामान 4 क. पेत 5-5 क. भक्तवत्वा तु भोजनं 6 क. दापयेतस्य 7 क. गोदोहमात्रं ※ 'समस्तव्यञ्जनोपेतं .........सोष्मकम्' पाठोऽयं र. यो. सा. वृ. वै , भा. प्र., च नोपलभ्यते ।
+"दिनत्रयं तु ......... रसेन च ।' अस्मात्परं ग. नि. :—
"सुभावितं ततः कृत्वा भक्तमध्ये प्रयोजयेत् ।
एषोऽग्निकल्पचूर्णस्तु नाशयत्यचिराद्‌गदान् ।
अजीर्णकं तथा ऽऽनाहं पञ्च गुल्मान् सुदुस्तरान् ।
ग्रहणी पाण्डुरोगांश्च श्वासकासांश्च दारुणान् ।।
प्रतिश्यायं क्षयं शोषं विद्रधिं कफवातजाम् ।
उदराण्यन्त्रवृद्धिं च ह्यष्ठीलां वातशोणितम् ।।
कुष्टानि च विशीर्णानि सन्निपातं सुदुर्जयम् ।
अर्शांसि वातरक्तञ्च कुष्ठमन्त्रस्य वृद्धिताम् ।।
अपस्मारं तथोन्मादं विभ्रमं च मदात्ययम् ।
प्रणुदत्युल्बणानेतान्नष्टमग्निं च दीपयेत् ।।
समस्तव्यञ्जनोपेतं भक्तं कृत्वा तु भोजने ।
प्रदद्यादस्य चूर्णस्य बिडालपदकं भिषक् ।।
ततस्तद्द्रवतां याति कोष्णत्वं च प्रपद्यते ।
एष चाग्निमुखश्चूर्णश्चूर्णराजो निगद्यते ।।
ब्रह्मणा निर्मितश्चैष ह्यश्विभ्यां परिकीर्तितः ।।"

टीका:— साजीखार, जवखार, चित्रक, पाठ, करञ्ज, सीधोलूंण, सउचल, बिडलूण, कचलूंण, समूद्रलूण, इलायची, मोथ[1], भाडंगी, बिडङ्ग, हींग, पुष्करमूल, शठी, दारुहलद निशोथ, पद[2]माख, वच, इन्द्रयव, आंवला हलद[3], तिंतडीक, गजपिप्पली, आम्लवेतस, आमली, दाडिमसार, त्रिगुडी, भीलावां, अजमोद, अजवाइन, देवदारु, हरडे, पतीस, प्रियंगु, हाऊबेर[4] किरमालौ, तिलां रा फूल रो खार, सूही[5]जणा रो खार[6], पलास रो खार काढ़ी लेई नै उन्हा गोंमूत्र स्युं मकरोई जै।[7] उसा सम मात्रा करि वांटि चूर्ण कीजै। उसा ने ई विजारा रा रस री भावना ३ दीजें आदा रा रस री भावना ३ दीजै। पांठांतरेण ? (पाठोक्त) रोग जाई ।।

## (४२) अथ नारसिंहचू[8]र्णम्

प्रस्थं शतावरी[9]चूर्णं प्रस्थं गोक्षुरक[10]स्य च ।
वारा[11]ह्या विंशतिपलं गुडूच्याः पञ्चविं[12]शतिम् ।।१६५।।

भल्लातकानां[13] द्वात्रिंशच्चित्रकस्य [14]दशैव तु ।
तिलानां लुञ्चितानाञ्च [15]प्रस्थं दद्याद् विचूर्णितम् ।।१६६।।

त्र्यूषणस्य पलान्यष्टौ शर्करायाश्च[16] सप्ततिः[17] ।
माक्षिकं शर्कराद्धेन मधु[18]नाद्धेन वै घृतम् ।।१६७।।

---

पाठान्तरम् बृ. यो. त.

'क्षारौ जीरे मिसिनतचतुर्जात-षट्कद्विभावां-
भार्गीदार्वीन्द्रियवहपुषासारधात्र्या पटूनि ।
कुम्भाब्दोग्रानलपृथ्वीविषा पौष्कराम्लोऽम्लिदीप्यौ
पूती पथ्यार्ग्वधसटिवृकीवेल्लरीहिङ्गु वेल्लम् ।।
शिग्रोर्मुष्के क्षुरतिलवटोर्भस्मतप्तोऽ सकृद्वा
वाः सिक्तोऽयो-मल इति समैर्लुङ्गमुक्तार्द्रकाम्भः ।
त्रिस्त्रिः पीतोऽग्निमुख उदराजीर्णगुल्मग्रहण्या—
नानाहोन्मादश्वसनकसनार्शः खुडे.........'

1 पत्रकं = तेजपात अथवा चित्रक (मूलपाठानुसार) 2 मुस्तं = नागरमोथा 3 जीरक = जीरा 4 हाऊबेर टीका में नहीं हैं। 5 मोखाखार 6 तालमखाने का क्षार भी टीका में नहीं है। 7 मंडूर गोमूत्रमारित सब औषधियों के बराबर।

शतावरी-समं[13] देयं विदारीकन्दचूर्णकम् ।
[14]एतदेकीकृतं चूर्णं स्निग्धे[15]भाण्डे निधापयेत् ॥१६८॥

पलार्द्धमुपयुञ्जीत यथेष्टं चात्र भोजनम् ।
※ मासैकमुपयोगेन जरां हन्ति रुजामपि※ ॥१६९॥

वलीपलित-खालि[16]त्यं [17]प्लीहपाण्डुउरः क्षतम्[17] ।+
भगन्दरं मूत्रकृच्छ्रम[18]श्मरीं च भिनत्यपि[18] ॥१७०॥

अष्टादशैव कुष्ठानि मूत्रकृच्छ्राणि यानि च ।×
[19]प्रमेहं च महाव्याधिं पञ्चकासान्सुदारुणान् ॥१७१॥

अशीतिं वातजाँश्चैव चत्वारिंशच्च पैत्तिकान् ।
विंशतिः श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान् ॥१७२॥

[20]अस्थिपर्वरुजं हन्ति[20] वृक्षमिन्द्राशनिर्यथा ॥

सकाञ्चनाभो मृगराजविक्रम—
[21]स्तुरङ्गमञ्चाप्यनुयाति वेगतः[21] ।
स्त्रीणां शतं गच्छति हृष्टपुष्टो[22]
[23]निरालसो दैत्यगणे हरिर्यथा[23] ॥१७३॥

पुत्रान्सञ्जनयेद्धीमान्[24] नरसिंहनिभांस्तथा ।
नारसिंहमिदं चूर्णं ख्यात[26] रोग[26]गणापहम् ॥१७४॥

---

1. नारसिंहचूर्णः 2 क. चूर्ण 3 क. रस्तथा 4 क. वारात्ता 5 क. गुडूची 6 क. विंसति 7 क. भल्लतकानां 8 क. तथैव च 9 क. लुचितानां मै. र., चक्र, र. र. च शोधितानां 10 क. सर्करायाः 12 क. सप्तभिः; मै. र., चक्र., ग. नि. च 'सप्ततिः' 12 ग. नि. तदर्द्धेन 13 क. सतावरी 14 क. एतानि समभागानि 15 क. पांडे ※-※ क. अस्मिन् स्थाने 'प्रयोगेन रुजं हन्ति रोगमपि जरामपि' इति पाठः 16 क. खालित्य 17-17 क. प्लीह—पांडुररक्षिताम्; मै र., चक. च 'मेहपाण्ड्वाद्यपीनसान्'; ग. नि. प्लीहव्याधींश्च पीनसान् ॥

※※ 'मासैकमुपयोगेन ……… रुजामपि' अस्मात् परं र. र. न कोऽपि श्लोकः

टीका:— शतावरि, टां २५६, वाराहीकंद टां ३२०, गिलोइसत टां ४००, भिलावा टां ५१२, चित्रक टां १६० लोया (लुंचित) तिल टां २५६, सूंठि टां १२८, मिरच टां १२८, पीपलि टां १२८, निवात टां ११२०, सहित टां ५६०, गाई रो घृत टां २८०, बिदारीकंद टां २५६, उषधां सगलां ही रो चूर्ण करि निवात, सहित (शहद), घृत भेलो करी नै चीकरणा वासरिण में घातीजै। टां ५ तथा ७ प्राति (सुबह) लीजै। जिको मन भावै सो जीमीजै। इतरा रोग हणई (नष्ट होंगे) जरा, पलीसल (बलि-पलित), छाया, पाण्डु, तौड (क्षत) खैन (क्षय), भगंदर, मूत्रकृच्छ्र, पाथरो, कोढ १८, वीस प्रमेह महाव्याधि, पंच कास दारुण, असी बाव रोग, चौवीस ? (चालीस) पित्त रोग, वीस कफ रोग, तेरह (द्वंद्वज व त्रिदोषज), हाडां रो पीड जाई, जिम रूपानो वज्र सोमा री प्रभा, बाघ रो बल, घोड़ा रो वेग सो स्त्री सेवे। हरि डीकरा महाबली जामें नारसिंघ सरीखो पराक्रम।

## (४३) अथ बिडरु[1]चकादिचूर्णम्

विडरु[2]चक यवानीजीरकं[3] द्वन्द्व पथ्या,
त्रिकटुक[4]हुतभुग्भ्यां वेतसाम्लाजमोदैः।

---

+ 'बलिपलित ..........उरःक्षतम्' अस्मात्परं भै. र. चक्र. च "हन्त्यष्टादशकुष्ठानि तथाऽष्टावुदराणि च" इत्यधिकः पाठः। ग. नि. अष्टादशैव कुष्ठानि तथा ऽष्टावुदराणि च' ॥

1 क. 18 भै. र, चक्र. च अश्मरीं च भगन्दरम्

× 'अष्टादशैव ......... यानि च' पाठो ऽयं भै. र., चक्र. च नोपलभ्यते।

19 भै. र. चक्र च. क्षयं

20-20 भै. र., चक्र. च 'सर्वानर्शोगदान्हन्ति'; ग. नि. 'एताः सर्वा रुजो हन्ति'।

21-21 ग. नि. 'तुरङ्गवेगी जलदौघनिःस्वनः'।

22 चक्र., भै. र. च सोऽतिरेकं; ग. नि. सोऽतिरम्यः

23-23 भै. र., प्रहृष्टपुष्टश्च यथा विहङ्गः; चक्र. प्रकृष्टदृष्टिश्च यथा विहङ्गः; ग. नि. 'सुरूपवान् सत्ववतां वरिष्ठः। 24 चक्र. धीरान् 25 क. ख्यातं 26 क. चूर्णं चेतिगणावहम् ॥; भै. र., चक्र. च 'सर्वरोगहरं नृणाम्' ॥ ग. नि. नारसिंहेति विख्यातश्चूर्णो रोगगणापहः ॥

1 क. रुचकादिचूर्णं 2 क. रुचिकजवानी 3 क. जीरके द्वे 4 टो. मथवह्निर्वेतसाम्लाजमोदे।

समवि[1]हितविडङ्गं धान्यकं तिन्तिडीकं[2]
पच[3]यति नगकूटं का कथा भोजनस्य ॥१७५॥

टीकाः— बिडलूण, सौंचल, अजवायण, जीरो, (दोनों जीरे), हरड, त्रिगडू, चित्रक, आम्लवेतस, अजमोद, विडंग (टां ३ लीजै), धणिया, डांसरिया, (समभाग चूर्ण), पहाड़ा रा टूक जरै तो जीमण री किसी कथा।

## (४४) अथ वृषादि[4]चूर्णम्

वृषखदिरहरिद्रा-देव[5]दारु यवानी,
त्रिफलघनवराङ्गी कर्णिकारा सपाठाः।
गलित-मधुसनि[6]म्बं लेहयेत्प्रात[7]-रह्नि,
त्रिद[8]शमुनिभिरुक्तं हन्ति विं[9]शप्रमेहान् ॥१७६॥

टीकाः— अरडूसो, खयर, हलद, देबदुवार, अजवायणि, त्रिफला, मोथ, तज, किरमालौ, पाठ, निंब रा पान, उसा सममात्र करि सहित (मधु) सुं अवलेहि लीजै। वीस ही प्रमेह जाई। सखरां (उत्तम) सार (लोह भस्म) मार्‌यो भेलीजै पाठ बिना ही (यद्यपि पाठ में नहीं कहा गया है तथापि)।

## (४५) तुम्बुर्वादिचूर्णम्[10]

तुम्बुरूण्य[11]भया हिङ्गु पौष्करं लवणत्रयम्।
यवानी च यवक्षारं विडंगं तु समानि च ॥१७७॥

त्रिवृत्[12] त्रिगुणितं चूर्णं सममुष्णाम्बुना पिबेत्।
आना[13]हमुदरं हन्यात्[14] विबन्धाग्निविनिग्रहः[15] ॥१७८॥
निहन्ति सर्वशूलानि तुम्बुर्वाद्यो[16] हि विश्रुतः[17] ॥

1 क. विहेति., टो. सममिति च 2 क. तिंतडीकं 3 टो. जरयति।
4 क. वृषादिचूर्णः 5 क. देवदपूजवानी 6 क. निंब 7 क. प्राति 8 क. त्रिदस
9 क. विसंति। 10 क, तुंबरादि चूर्णः 11 क. तुम्वरुमभया 12 क. त्रिबृतिगुणितं
13 क. अतनाहसुमुदंराग्य 14 क. चिवंधाग्नि 15 क. विनिग्रहात् 16 क तुंबराद्यौ
17 क. विश्रुत।

टीका:— तूंबरू, हरडै, हींग, पुष्करमूल, सीधौ, सौचल, वडलूण, अजमो, जवाखार, विडंग उषध सममात्रा कीजै। निसोत त्रिगुणी घालीजै। चूर्ण टां २।। उश्ण पाणी सूं लीजै। आफरो, उदर, विबंध, अग्नि रो निग्रह सर्वशूल जाई ।।

(४६) अथ पिप्पल्यादिचूर्णम्[1]

कर्षमात्रा भवेत्कृष्णा त्रिवृता स्यात्पलोन्मिता ।
खण्डस्य च [2]पलं ज्ञेयं चूर्णमेकत्रकारयेत् ।।१७९।।

[3]कर्षमात्रं लिहेदेतत् क्षौद्रेणाध्माननाशनम् ।।१८०।।

टीका:—कर्ष (मात्रा) पिप्पली (टां २।।) निसोत टां १० खांड टां १० चूर्ण करि सहित (मधु) टां १५ उषध टां २।। अवलेहीजै, आफरो जाई ।।

इति श्रीपरमहंस-परिव्राजकाचार्य-श्रीनृसिंहभारती-तत् शिष्य-परमहंस-परिव्राज[5]काचार्य-श्रीआनंदभारतीविरचितायां आनन्दमालायां चूर्णाधिकार:। द्वितीयो[6]ध्याय: समाप्त:[7] ।।

---

पाठान्तरम्:— बृ. यो. त., यो. र. च

'चूर्णं तुम्बुरुरामठत्रिलवणक्षाराजमोदाभया-
वेल्लत्र्यूषणपुष्कराह्वयकृतं कुम्भत्रिभागान्वितम् ।
मन्दोष्णेन जलेन पीतमखिलं शूलं सगुल्मोदरा-
ध्मानाजीर्णविबंधमामपवनानाहौ च शीघ्रं जयेत् ।

शा.

"तुम्बुरूणि त्रिलवणं यवानी पुष्कराह्वयम् ।
यवक्षाराभयाहिङ्गु-विडङ्गानि समानि च ।।
त्रिवृत्त्रिभागा विज्ञेया सूक्ष्मचूर्णानि कारयेत् ।
पिबेदुष्णेन तोयेन यवक्वाथेन वा पिबेत् ।।
जयेत्सर्वाणि शूलानि गुल्माध्मानोदराणि च ।।"

1 क. पिंप्पलादि चूर्णं: 2 क. पलविज्ञेय 3 क. कर्षालित 4 क. नासनम् 5 प्राजिका 6 क. द्वितीयो 7 क. समाप्ता:

ग. नि., चक्र. भै. र. च

'तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम् ।
पिबेद्यवाम्बुना वात-शूलगुल्मापतन्त्रकी ॥

ग. नि.

'चूर्णं तदेतदिति तुम्बुरुपुष्कराह्व-
पथ्याम्लवेतसबिडं रुचकं सहिङ्गु ।
सिन्धूद्भवेन सहितं यववारिपीतं
शूलापतंत्रकविकारहरं यदुक्तम् ॥



# अथ गुटिकाधिकारस्तृतीयः

### अथ गुटिकाधिकारो लिख्यते

### (१) [अथ वृद्धकामेश्वरगुटिका[1]]

कङ्कोलः श[2]रपुङ्खिकागजबला-वीरा[3]वरीन्दी[4]वरी-
[5]वासावत्सकबीज-वारणकणा विश्वोपकुल्योषणम् ।
बीजानि[6] त्रपुसत्रिकण्टकसणाऽध्यण्डेक्षुराणां[6] तथा,
[7]मज्वानो बदरीविभीतकशि[8]वाधात्रीपियालोद्भवाः ॥१॥

तालीसं शिव[9]कन्दलामृतलता-गाङ्गेरुकीबीजकं,
शृङ्गीधान्यकचित्रकं सु[10]सलिलं [11]मूर्वाशटीमेथिकाः ।
[12]दीर्घायुर्वृषभोऽथ मेदसुमहामेदे च काकोलिका
तद्वत्क्षीरकवायसी निगदिता [13]वद्धिस्तथा ऋद्धिका[13] ॥२॥

---

1. कल्पते वृद्धकामेश्वरगुटिकाः; र. यो. सा., बृ यो त. च महाकामेश्वरो मोदकः; बृ. पा. महाकामेश्वरः 2 र. यो. सा., बृ. पा., बृ. यो. त. च-बृहदेलिका 3 वीरा = महाशतावरी, 4 वरी = शतावरी, इन्दीवरी = नीलकमलं, क. वरंदीवरी इति पाठः; बृ. पा. वरेन्दीवरी इति पाठः (वरा = त्रिफला) 5 बृ. पा. श्यामा; बृ. यो. त., र. यो. सा. च वासा इति पाठः 6-6 क. त्रिपुसः त्रिकंठकसनाध्यडेछुराणां; बृ पा. त्रपुसः त्रिकण्टककणैरण्डेक्षुराणां; बृ. यो. त. त्रपुसः त्रिकण्टकसणामापेक्षुराणां 7 क. मजानो 8-8 क. रिवाधात्रीप्रियां लोद्भवाः 9 क. सिवकंदला; गग्रथे, र. यो. सा. च शिवलिङ्गिका (शिवकंदला = कर्पूरं किन्तु शिवलिङ्गिका = शिवलिङ्गिकाबीजानि) 10 बृ. यो. त., र. यो. सा. च, समुसली; बृ. पा. ससुलभं (सुलभा = तुलसी) 11 र. यो. सां. वीरा; बृ. यो. त., बृ. पा. च हीरा 12 क. दीर्घायुः छ. र यो. सा., बृ. यो. त. च दार्वीयुग् 13 क. स्पृद्धिस्तथा वृद्धिका; बृ. यो. त., र. यो सा. च. वृद्धिस्तथा मृद्धिका; बृ. पा. वृद्धिस्तथा ऋद्धिका ।

❀शालू[1]कद्वय-राजिकाद्वयपृथग्जीराजमोदाद्वयं,❀
×श्रीखण्डद्वयमब्धिशोषमुसली-वांशी-समांसी मिसिः ।×

[2]चातुर्जातक यो[3]निका ? कुमुदिका[4]जातीफलं यष्टिका,
⊕द्राक्षा-खा[5]खसवल्कलं मदनकं शृङ्गाटशु[6]श्रोषणम्⊕ ॥३॥

जम्बूपद्मकपुष्क[7]राह्वकदलीकन्दाश्वगन्धाबला:[8],
+वाराही च विदारिमर्कंकरभः काश्मीरकं दाडिमम् ।+
++मेथी-मोचरसा जयाश्च रसया ? देयाऽथ शुक्त्यंशकाः ॥४॥

---

1 क. सो लूकद्वय ❀-❀ 'शालूकद्वय ........... अजमोदाद्वयं', अस्मिन्स्थाने बृ. पा. "शालूकाद्वय-रूमिकाह्वयकटूजीराजमोदाह्वयं" इति पाठः (रूमिका = रूमीमस्तङ्गीति लोके, शालूकं = पद्मकन्दः, कटू = कटुकी) ×-× 'श्रीखण्डद्वयं ... ... मिसिः', अस्मिन्स्थाने बृ. पा. "ह्वब्धेःशोषमुशीरकं च मुसली मांसी-सवासा-मिसिः ।" इति पाठः । क. 'श्रीखंडं द्वय मब्धिशोषमुसली वासी स-मांशी मिसि' इति पाठः । अस्मात् परं र. यो. सा., बृ. यो. त., बृ. पा. च 'जातीपत्रिलवङ्गमर्कंकरभः काश्मीरकं दाडिमम्', इत्यधिकः पाठः । 2 क. चातुर्पातक 3 बृ. यो. त. लोनिका; र. यो. सा. कोलिका 4 क. जाजीफलं 5 क. द्राष्या खस्युल 6 क. श्रृंगाटशुभोषणां; र. यो. सा. श्रृंगाटकं-त्र्यूषणम्; बृ. यो. त., बृ. पा. च शृंगाटशुश्रोषणं ⊕⊕ 'द्राक्षा.................. शुश्रोषणं', पादोऽयं र. यो. सा., बृ. यो. त., बृ. पा. च अग्रिमश्लोकस्य प्रथमो पादः 7 क. पुष्कराह्वः 8 'वला' स्थाने र. यो. सा., बृ. यो. त. च 'तिलाः' इति पाठः + 'वाराही च.............दाडिमम्', पाठोऽयं र. यो. सा., बृ. पा., बृ. यो. त. च. नोपलभ्यते । ++ 'मेथी मोचरसा ............ शुक्त्यंशका', पाठोऽयं र. यो. सा., बृ. यो. त., बृ. पा. च नोपलभ्यते; अस्मिन्स्थाने बृ. यो. त., बृ. पा. च "माषाः शाल्मलिबीजवल्कलरसा-मूलञ्च पौनर्नवं; कर्षांशं विजयाऽखिलार्ध-तुलया देयाऽथ शुक्त्यंशकाः ।" इति पाठः; तदेव समीचीनः—यतः क. ग्रन्थे श्लोकोऽयं त्रिपादात्मक एव लभ्यते । 'कर्षांशं............शुक्त्यंशकाः' अस्मिन् स्थाने र. यो. सा. "कर्षांशं सकलं सुभृष्टविजया देया तु पादांशिका" इति पाठः ।

रस-कनक[1]-भुजङ्गास्तारतापीजवङ्गा-
गगनतरणिसारावेध[4]मुख्यास्तु साराः।
द्विगुणित[5]सितमेतच्चूर्णगो[6]लं विदध्या-
त्तदनु मधुहविर्भ्यां प्राश्य[7] पेयं [8]पयोऽनु॥५॥

यक्ष्माणं ग्रह[9]णीगदं गुदरुजामानाह-गुल्मोदरा
ण्युन्मादानल[10]साददीर्घकल[11]नापस्मार मेहाश्मरीः[12]।

---

1. र. यो. सा., बृ. यो. त., बृ. पाग्रन्थे च 'रस-रसक' इति पाठः। कनकं-सुवर्णं, किन्तु रसकन्तु खर्परी-खपरिया इति लोके। 2 क. भुजंगातार; बृ. पा. 'भुजङ्गस्ताल', र. यो. सा., बृ. यो. त. च 'भुजङ्गास्तार' इति पाठः। तारं-रजतं किन्तु तालं तु हरितालम्। 3 क. गगनि; गगनं = अभ्रम्, सारं = लोहम् तरणिः-ताम्रम्। 4 र. यो. सा. 'वेदमुख्यास्तु साराः' इति पाठः; क. ग्रंथे वेधमुख्यातुषाराः' इति पाठः बृ. पा., बृ. यो. त, च 'वेधमुख्यास्तुषाराः' इति पाठः। "वेधमुख्याः"—रसवेधविधाने रसग्रन्थेषु रस-कनकादयः वेधयोग्याः कीर्तिताः—तद्यथा—

'नागः करोति मृदुतां निर्व्यूढ़स्तां च रक्ततां च रविः।
तां पीततां च तीक्ष्णं काचस्तत्कालिकविनाशं च॥
वङ्गाभ्रं सितमाक्षीकं शैलं वा वाहयेत्सिते।
तत्तारं च दशांशेन तारोत्कर्षं करोति हि॥
रसकसमं सुध्मातं कनकं भुक्त्वा ततोऽर्कचन्द्रलेपेन।
माक्षिकसत्त्वं हेम्ना करोति जीर्णो रसः शतांशेन॥'

र. हृ. तं. 18/15-20

किंतु, 'वेधमुख्यातुषाराः' इति पाठे कस्तूरी-कर्पूरञ्च इत्यर्थः।
(वेदमुक्या = कस्तूरी; तुषारः = कर्पूरः।)
5 क. द्विगुणितसिमेतत् 6 क. गौलंविदध्यातदनु 7 क. प्रास्य 8 क. ययोनु ❋ 'तदनु ....... पयोऽनु'; अस्मात्परं र. यो. सा. "भवति युवतिमत्तः कामरूपादरः स्याद्धरति सकलरोगान् कामदः कामुकानाम्॥" इत्यधिकः पाठः॥
9 क. गृहिणीगदां 10 बृ, पा., क, 'दाहोदरा'; बृ. यो. त. 'प्लीहोदरा' 11 क. नलस्मदकार्शकना 12 बृ. पा., बृ यो. त., च दीर्घकसना।

श्वासं शूलभगन्दरं[1] ज्वरमहो[2] रोगं[3] क्रिमिं कामलां
पाण्डुत्वञ्च हलीमकञ्च[4] जयति श्री[5]मानयं लीलया ।।६।।

रेत:[6] क्षीणमलङ्करोति मदनोन्मादेन[7] मन्दानलं
❋-युक्त्या[8] गुर्वशनस्य दीनवपुषं कान्त्या जडं मेधया❋[10] । ?
का[11]र्णाटीशतसङ्गसङ्गरजयोद्दामश्रिया कामिनं
×दुर्बीजं[12] शुभ[13]रेतसं सुत[14]नयं कुर्यात्त्वलङ्कारिणम् ×[15] ।।७।।

पारीन्द्रं[16] च पराक्रमेण तुरगं वेगेन तारापतिं[17],
कान्त्या[18] च[18] द्विरदं बलेन शिखिनं नादेन बुद्ध्या बुधम्[19] ।

+कर्णाद्यास्तरला: रतौ च कुशलश्चापात्तथामारत:,❋
⊕कामन्य: सुभगा भवन्ति नि[20]तरां कन्दर्पमादोन्मदा:[21] ।।⊕
⊖श्रीकामेश्वरसेवया गतवया अप्येति[22] यून:[22] श्रियम्⊖ ।।८।।

---

1 क. बृ. यो. त., बृ. पा., र. यो. सा. च 'मरोचकं' 2 बृ. यो. त., बृ. पा., र. यो. सा. च ज्वरमुरो' 3 क. रोग क्रमीं कामला 4 क. हलीमकं मुहरति 5 क. श्रीमान् यं हेलया; बृ. पा. श्रीमन्नयं लीलया 6 क. रेतक्षीण 7 र. यो. सा. मदनोन्मादं महाबुद्धिदं । 8 क. पक्वा 9 क. वपुषां; बृ. पा. रोगणमनं 10 बृ. पा. 'पुष्टिप्रदं कामिनाम्'; क. "कान्त्या जडं मेधय:" । ❋❋-'युक्त्या ......... मेधया'; पाठोऽयं र. यो. सा. नोपलभ्यते 11. क. कर्णाटी 'कार्णाटी ...... कामिनं' पाठोऽयं र. यो. सा , बृ. पा च नोपलभ्यते । 12 क. दुर्वार्य 13 क. सुभ 14 क. सकुस्ते 15 क. श्रीमानयं हेलया । ×-× 'दुर्बीजं .......... कुर्यात्त्वलङ्कारिणम्, पाठोऽयं र. यो. सा., बृ. पा. च नोपलभ्यते ।

16 क. यारीन्द्रं; बृ. पा पक्षीन्द्रं; र. यो. सा. नागेन्द्रं 17 क. तारापति 18 क. कान्त्यथद्धि ? 19-19 र. यो. सा, (कान्त्या) चैव मुडो: पतिं चलबलं नादे मयूरं धनं । 19-19 क. द्विरदं वलेन सिपिना नादेन बुध्या बुध: । +-+ कर्णाद्या: ............मारत:', अस्मिन्स्थाने क. ग्रन्थे "कर्णाद्यास्तरला: रतौ च कुशल: चापातयामास्व:" ? इति पाठ: । पाठोऽयं र. यो. सा., बृ. पा., बृ. यो. त. च. नोपलभ्यते । 20 क. वितरा 21 क. मदा ⊕-⊕ 'कामन्य:..... ...... मादोन्मदा:, अस्मिन् स्थाने र. यो. सा., बृ. यो. त., बृ. पा. च "नासत्यावधरीकरोति बपुषा लावण्यलक्ष्मीजुषा" इति पाठ: । र. यो. सा. 'जुषा' स्थाने "युत:" । 22-22 क. आप्येति यूत:; र. यो. सा. आप्नोति यून: । क. ग्रन्थे श्लोकोऽयं पञ्चपदात्मक: ।

अम्लैश्च[1] मद्यैः पातव्या[1] घृतेन पयसा तथा[2] ।
एषा[3] काङ्का[4]यनेनोक्ता गुटिका[5] गुल्मनाशिनी[6] ।।१४१।।

[7]अर्शोहृद्रोगशमनी[7] [8]क्रमीणामपि नाशिनी[8] ।
❋गोमू[9]त्रयुक्ता शमयेत्[9] कफगुल्मञ्चिरो[10]त्थितम् ❋ ।।१४२।।

क्षीरेण पित्त[11]गुल्मञ्च मद्यै[12] रम्लैश्च वातिकम्[12] ।
त्रि[13]फलारसमूत्रैश्च[13] नि[14]हन्यात् सान्निपातिकम्[14] ।।१ऊ३।।

+'रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत्'+ ।।

टीका:— सठि[15] टां १०, पुहकरमूल टां १०, दातणी टां १०, चित्रक टां १०, सोवनमाखी टां १०, वच टां १०, (वच से पहले मूल पाठ में शृङ्गबेर[16]=अद्रक भी है), निशोथ[17] टां १०, हींग टां १०, "जवखार[18] टां १०, (संशोधित पाठानुसार टां २०) (मूल पाठ क में यवक्षारं पलार्द्धं" है), चूक[19] (अम्लवेतस) टां १० (२०), अजवाइन[20] टां १० (भै. र. आदि ग्रंथों में 'सीतवर्तिकं' के स्थान पर 'कार्षिकं' अर्थात् एक तोला कहा गया है ।), जीरो टां ५, (मिरच[21] टां ५—मूल पाठानुसार) धाणा टां ५ (अजवाइन, जीरा व धाणा का तोल मूल पाठ में एक सा है किंतु टीका में १०-५-५ क्रमशः इनके तोल भूल से दे दिये

---

1-1 क. अम्लेभ्वमद्यैः पीतव्य; ख. आम्लैश्च मद्ये पीतव्यं; भै. र., चक्र, च अम्लैर्मद्यैश्च यूषैश्च; र. र. अम्लैर्द्रव्यैश्च यूषैश्च 2 भै. र., चक्र., र. र. च. ऽथवा 3 क. एषां 4 ख. कंकायने............'; क. ............ प्रोक्ता 5 भै. र., चक्र. च गुडिका 6 क. नासिनी, ख. नाशनी ।

7-7 क. असों हृद्रोगसमनी, ख. अर्शहदोग समये 8-8 ख. कफगुल्मचिरोछितं 9-9 क, मूत्रकृच्छ्रं तु समयेत्; ❋-❋ 'गोमूत्रयुक्ता............ चिरोत्थितम्', पाठोऽयं ख. ग्रन्थे नोपलभ्यते । 10 क. चिरोछितं 11 क. पित 12-12 ख. मथै आमलैश्च वातकं 13 ख. त्रिफलारसमूत्रेश्च 14 क. नियछेत्सानिपातिकं, ख. निपछं सनिपातकं +-+ 'रक्तगुल्मे............ पाययेत्'. पाठोऽयं ख. ग्रंथ एव लभ्यते ।

15 ख. कचूर 16 ख. सूंठि 17 ख. टाँ १ 18 ख. टाँ २० 19 ख. अमलवेत को रस टां २।। 20 ख. अजवाणी टां ५ 21 ख. मिरच टां ५ ।

गये हैं।), सौंफ टां ५ (टीका में 'सीतवार्त्तिकं' का अर्थ सौंफ[1] किया गया है जो उचित नहीं है) कालोजीरो टां ५, अजमोद टां ५, वोषद (औषधियों को) वांटि, कपडछाणि करि बिजोरा रस सुं गोली टां २।। प्रमाण बांधीजै। ज्वरजठरगुदार्शोंसु वह्निमांद्यक्षया स्युः ? (यह अपपाठ इस स्थान पर नहीं होना चाहिये, मूल पाठ में यह नहीं कहा गया है।) [2]मूत्रकृच्छ्र ? कफगुल्म घणां दिहाडां (दिनों) रो जाइ। दूध सूं पित्तगुल्म जाई। मद्य व अम्लों से (टीका भाग में क. में 'मदन इ आंवला स्सुं लिखा है) वात गुल्म जाइ। गौमूत्र अनइ-त्रिफला रा रस स्युं सन्निपातज जाइ। स्त्री रा रक्तगुल्म सांडि (ऊंट) रा दूध मुं जाई।

अथ वर्द्धमानपिप्पली[1]

※'त्रिवृध्या पञ्चवृध्या च सप्तवृध्या तथा कणा।
एवम्पीतं दशदिनं पिप्पलीवर्धमानिका ।। सुनिरोगा यान्ति'※

---

1 ख. टीका में सीतवार्त्तिकं को लिखना भूल गये हैं। 2 'मूत्रकृच्छ्र से ......... क्षया स्युः', तक का पाठ ख. ग्रंथ में नहीं है। इसके स्थान पर उसमें, "प्रथम सा तो ? १ ऊंटणी का दूध सों दीजै। गोली १ प्रात। गोली १ सांड। स्त्री को रक्तगुल्म जाई।।"

1 क. वृद्धमानपिप्पलिः; क. ग्रन्थे पाठस्यास्याऽभावः ख. ग्रन्थोक्तपाठस्तस्मादत्र प्रदर्शितः। ※-※ 'त्रिवृध्या...... ...यान्ति', अस्मिन्स्थाने ग. ग्रन्थे—

"क्रमवृद्ध्या पञ्चवृद्ध्या वा सप्तवृद्ध्या तथा कणा।
एवं पीतं दशाहानि पिप्पलीवर्द्धमानकम्" ।। इति पाठः

मल्लप्रकाशे—

'त्रिभिरथ परिवृद्धं पञ्चभिः सप्तभिर्वा,
दशभिरिति प्रवृद्धं पिप्पली वर्द्धमानम्।
इति पिबति नरो यस्तस्य नो श्वासकास—
ज्वरजठरगदार्शो वह्निमान्द्यं क्षयाः स्युः।।"

अथ रसोनपिण्ड:[1]

*पलं शतं रसोनस्य[2] गुटिका[3] अकुलीकृता: ।*
+तदुग्रन्धनाशाय[4] रात्रौ तक्रे विनिक्षिपेत् ।।१४४।।

प्रात: सूक्ष्मतरं पिष्ट्वा तिलस्य कुडवन्तथा ।+
हिङ्गु[5] त्रिकटुकं[6] क्षारौ[7] द्वौ[8] पञ्च[8] लवणानि च ।।१४५।।

---

गदनिग्रहे पाठान्तरम्—

"क्रमवृद्ध्या दशाहानि दशपैप्पलिकं दिनम् ।
वर्द्धयेत् पयसा सार्धं तथैवापनयेत्पुन: ।।
जीर्णे जीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायन: ।।
पिष्टास्ता: बलिभि: सेव्या शृता मध्यबलैर्नरै: ।
शीतीकृता चाल्पबलैर्वीक्ष्य दोषामयान् प्रति ।।
दशपैप्पलिको ज्येष्ठो मध्यम: सप्तभि: स्मृत: ।
यस्त्रिपिप्पलिपर्यन्त: स कनीयान् स चावलै: ।।
बृंहणं स्वर्यमायुष्यं प्लीहोदरविनाशनम् ।
वयस: स्थापनं मेध्यं पिप्पलीनां रसायनम् ।।"

अपरञ्च—ग. नि.

"पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ।।"

1 क. लसणप्पंड: 2 क. लसोनस्या 3 क. गुटिकान्यकुलीकृता:; ग. गुलिका विकुन्नीकृम् *-* 'पलं शतं ....... कृता:' अस्मिन्स्थाने "रसोनस्य पलशतं तिलस्य कुडवन्तथा" इति भै. र., ग. नि., चक्र. भा. प्र., र. र., च पाठ:; वृ. वै. 'तुला सम्यग्रसोनस्य तिलस्य कुडवन्तथा' इति पाठ: । 4 क. नाशाय +-+'तदुग्रगंध ...... कुडवंतथा' पाठोऽयं चक्र., भै. र., वृ. वै., ग. नि. भा. प्र., र. र. च नोपलभ्यते । "तदुद्रगंध..........प्रात: सूक्ष्मतरं पिष्ट्वा" पर्यन्त एव पाठ: गग्रन्थे दृश्यते । तत्र 'तिलस्य कुडवन्तथा' इति पाठ: नोपलभ्यते । 5 क. हिंगु 6 क. त्रिकटुकं 7. क. क्षीरं—टीकाभागे 'जीरा' इति गृहीत: 8-8 क. क्षाराणि किंतु टीका भागे द्वौ क्षारावेव पठितौ ।

शतपुष्पा[1] तथा[2] कुष्ठं पिप्पलीमूलचित्रकौ[3] ।
अजमोदा यवानी च धान्यकञ्चापि बुद्धिमान् ।।१४६।।

प्रत्येकञ्च[5] पलञ्चैषां[6] सूक्ष्मचूर्णानि कारयेत् ।
घृतभाण्डे दृढे[7] चैतत्[8] स्थापयेद्[8] दिनषोडशम्[9] ।।१४७।।

प्रक्षिप्य कटुतैलस्य[10] प्रस्थार्द्धं काञ्जिकस्य च ।
खादयेत्[11] कर्षमानञ्च [12]तोयमेरण्डजं पिबेत्[12] ।।१४८।।

❀[13]अजीर्णमातपं रोषमतिनीरं पयो गुडम्[13] ।
[14]रसोनमश्नन् पुरुषस्त्यजेदेतन्निरन्तरम्[14] ।।१४९।।

आमवाते[15] तथा[16] शोथे सर्वाङ्गैकाङ्गसंश्रये ।
अपस्मारेऽनले मन्दे श्वासकासगदेषु[17] च ।।१५०।।
सोन्मादे वात[18] भङ्गे च शूले जत्रुषु[19] शस्यते ।।+

टीका:— लसण छोलि गुली करि[20] टा १००० राति छाछि मांहि घाति राखीजै । परभाति लसण पीसीजे; वीजा ही उसा सहि वांटि छाणि भेला कीजइ तियां रा नामः— तिल टां ४०, हींग टां १०, त्रिफला[21]

---

1 क. शतपुष्फा, ग. 'शतपुष्पा तथा कुष्ठं' इति पाठस्तत्र नोपलभ्यते । 2 ग. नि. वचा; भा. प्र. निशा 3 क. चित्रकै: 4 क. बुधिमान् 5 क. प्रत्यकं 6 क. चापलं 7-7 क. दृढ चोपि 8 क. स्थापये 9 क. षोडशः ।

10 भै. र., वृ. वै., ग. नि., चक्र., भा. प्र., र. र. च 'तैलमानीञ्च' 11. खादयेत् 12-12 भै. र., वृ. वै., ग. नि., चक्र., भा. प्र., र. र., च 'तोयं मद्यं पिबेदनु' 13-13 क. 'अजीर्णमातपरोपमतिनीर पयो गुडम्' 14-14 क. लसोनमुष्णत् पुरुषस्त्यजेदेत निरंतरं, ग. लशोनमश्नुतपुरुष तेजो देता निरंतरं । ❀-❀ 'अजीर्णमातपं ........ ...निरन्तरम्' पाठोऽयं र. र., चक्र., भै. र., भा. प्र., ग. नि., वृ. वै. च नोपलभ्यते । 15 क. आमवातं 16 भै. र., वृ. वै., ग. नि., चक्र., र. र., च तथा वाते; भा. प्रा. वातरक्ते 17 भै. र., चक्र, भा. प्र. गरेषु च; वृ. वै. भगन्दरे, ग. नि. गलामये; र. र. ज्वरेषु च 18 क. बातभागं 19 क. तुषु प्रशस्यते; ग. नि. जत्रुषु शस्यते । + अस्य योगस्य मूल पाठः ख. ग्रन्थे नोपलभ्यते ।
20 ख. लसण सेर १०, 21 ख. त्रिफला का उल्लेख नहीं है, मूल पाठ में भी नहीं है ।

टां ३०, त्रिगडू टां ३०, जीरो[1] टां १०, जवखार टां १०, साजी टां १०, सीधो टां १०, सौंचल लूंण टाँ १०. विडलूंण टां १०, कचलूंण टां १०, समुद्रलूंण टां १०, सोवा[2] टां १०. कूट टां १०, पीपलामूल टाँ १० चित्रक टां १०, ऋजमोद टां १०, अजमो टां १०, [3]सरिसव रो तेलि टां १२८, कांजी टां १२८, लसण उसा—तैल कांजी भेली करि घृतइ चीकणइ वासण मंई दिन १६ राखीजै पछै[4] टां ३ तथा ४ उपध एरण्ड रा क्वाथ स्युं लीजई। इतरा थोक टालीजइ। अजीर्ण, तावड़ौ, रोस, अधिकउ पाणी। कलिंग भाषा रो निबंध टां २।। कर्ष कहीजै अयर टां १० पल थाइ तथा मागव रै मत्त: कर्ष रा टां ४ अर मागध रे मत पल टां १६ थाइ। अठे लसण पिंड रे विषै कलिङ्ग परिभाषा रो निबंध लिखीयाँ छै। पिण लोक कहै छै मागधी रा पल लीजै अस महादेव मिश्र पातीसाही छै। सु कहै छै जू कलिंग हीज रूडौ। दूध गुड़ निरन्तर टालीजई। गुण आंब वाव सोथ सर्वांग, अपस्मार, मदाग्नि, तिलक ? श्वास, कास, उन्माद[5], वाव रउ भाग, शूल एता जाइ।

इति श्रीपरमहंस-परिव्राजकाचार्य-श्रीनृसिंहभारती-तत् शिष्य परमहंस-परिव्राजकाचार्य-श्रीआनन्दभारती—विरचितायां (आनन्द-मालायाः) गुटिका (धिकारस्तृतीयः[6]) ।।❀



1 क. व ख. के टीकाकारों ने 'क्षीर' का अर्थ जीरा किया है जो उचित नहीं है। 2 ख. सौंफ 3 ख. धाणा-मूल पाठ में धाणा है, क. की टीका में भूल से नहीं कहा गया है। 4 ख. टं २।। खवाजे 5 ख. गुदादोष-उन्माद-ख. के टीकाकार ने मूल पाठ के 'गदेपु' को 'गुदेपु' पढ लिया होगा 6 क. गुटिकारस्नतियः ❀ ख. 'इति श्रीयोग सास्त्रे योगज्ञाने आनंदकृत सिधिकृत गुटिकाधिकारो नाम चतुर्थोध्याय। स्माप्ता।।'

# अथ लेपाधिकारश्चतुर्थः

अथ दशाङ्गलेपः[1]

शिरीषयष्टीनतचन्दनैला-मांसीहरिद्राद्वयकुष्ठ[2]वालेः[3] ।
लेपो दशाङ्गः[4] सघृतः [5]प्रयोज्यो विसर्पकण्डू×व्रणशोथहारी[5] ॥१॥

**टीका**—सिरीसि की छालि टां २।।, महलोठी टां २।।, तगर टां २।।, रक्तचन्दन टां २।।, एलादाणा टां २।।, छड टाँ २।।, हलद टां २।।, दारुहलद टां २।।, कूठ टाँ २।।, वालौ टां २।।, इन औषध समान[6] गोघृत लीजै। औषध पीसीजै। अंगि मर्दन कीजै। षत, गूमडौ, कण्डू, जलनी (?) दाह (?) एते रोग जाहि।

---

1 क. दसांग 2 वृ.वै. यव 3 क. जालै; ग.नि. तोयैः 4 ख. दसांग 5-5 'प्रयोज्यो ··· ··· हारी', क.ख. पाठोऽयं न दृश्यते। × यो.र. कण्डू स्थाने 'दुष्ट' इति पाठः, वृ.यो.त. 'वुष्ठ' इति पाठः 5-5 वृ.वै. कण्डूज्वरसर्पिहारी चक्र. व्रणस्थाने "ज्वर" ×भा.प्र. 'कण्डूव्रण' स्थाने "कुष्ठज्वर" इति पाठः

पाटान्तरम् शा०—

'शिरीषं मधुयष्टी च तगरं रक्तचन्दनम् ।
एला मांसी निशायुग्मं कुष्ठं बालकमेव च ॥
इति संचूर्ण्य लेपोऽयं पञ्चमांशघृतप्लुतः ।
जलेन क्रियते सुज्ञैर्दशाङ्ग इति संज्ञितः ॥
विसर्पान् विषविस्फोटान् शोथान्दुष्टव्रणाञ्जयेत् ॥'

6 शार्ङ्गधर में समस्त चूर्ण की अपेक्षा से स्पष्टतः केवल पञ्चमांश गोघृत मिलाने का आदेश है। वहीं साधारण नियम लेप में स्नेह मिलाने का इस प्रकार है:—

'षड्भागं पैत्तिके स्नेहं चतुर्भागं तु वातिके ।
अष्टभागं तु कफजे स्नेहमात्रां प्रदापयेत् ॥'

समान भाग घृत मिलाने की कल्पना टीकाकार की है। यह मूल पाठ में नहीं है।
(सम्पादक)

अथ पुनर्नवादिलेपः

पुनर्नवां दारु शुण्ठीं सर्षपः[1] शिग्रुरेव[2] च ।
*पिष्ट्वाचैवारनालेन* प्रलेपः[3] सर्वशोथहा[4] ।।२।।

टीका—साटी री जड़, देवदारू, शूंठी, सिरस्युं, सोहींजणा रा जड़ री छालि, उसा सर्व वांटि छाणि कांजी सूं लेप कीजै सर्वाङ्ग सोजो जाइ ।

अथ इङ्गुदीलेपः

×इङ्गुदिनिशावि[5]-शाला-रास्ना-सैन्धवदारुकुष्ठरविदुग्धैः ।×
[6]दत्त। क्रमेण लेपो हरति महाकर्णकग्रन्थिम्[6] ।।३।।

टीका—हिंगोराफल मांहिली मींजी, हलद, तूंबा री जड़, [रास्ना] सींधौ, देवदारु, कुठ, उपध सर्व वांटि छाणि अर्कदुग्ध मांहि भेली गांठियां कर्णकरियां उपरि लेप कीजइ कर्णक जाइ ।

अथ देवदार्व्यादिलेपः[7]

देवदारु नतं[8] कुष्ठं नलदं विश्वभेषजम् ।
Yलेपः काञ्जिकसम्पिष्टः सद्यो हन्ति शिरोरुजम् ।।४।Y

टीका—देवदारु, तगर, कूठ, वालउ,[9] [सौंठ]उपध सममात्रा वांटि कांजी स्यूं लेप कीजइ, सिरपीडा जाइ ।

---

1 ख. शर्षपा, ख. सर्षसी 2 क. सिग्रु, ख. सीग्र 3 ख. प्रलेपु 4 क. सर्वशोथकी, ख. सर्वसोथहा ×-× 'पिष्ट्वा ·· आरनालेन', अस्मिन्स्थाने भा.प्र. "अम्लपिष्टः सुखोष्णोऽयं", इति पाठः ग. हिंगोटीलेप, ग.नि. इङ्गुद्यादिलेपः 5 क. बाला *-* 'इङ्गुदि ······ दुग्धैः', अस्मिन्स्थाने ख. ग्रन्थे "इगुडि-निसाविसालारासना-सौधव दारुकुष्ठं । नलदं विश्वभेपजम् ।" इति पाठः ।। ग.नि. "इङ्गुदिनिशाविशालासैन्धव-सुरदारुकुष्ठरविदुग्धैः", इति पाठः; यो.र. 'हिङ्गु-द्विनिशाविशाला-सैन्धवसुरदारु-कुष्ठरविदुग्धैः ।', इति पाठः 6 क. दत; ख. 6-6 लेपकांजिकरविदुग्धै दत्तक्रमेण लेपो हरित महार्कणिकग्रथि । पाटान्तरम् भा.प्र., वृ.यो.त. च—

"निशाविशालाऽऽमयभाणिमन्थ-दार्वीङ्गुदीमूलकृतः प्रलेपः ।
प्रभाकरक्षीरयुतः प्रभावाद् व्यस्तः समस्तोऽप्यथ कर्णिकघ्नः ।।" इति

7 क. देवदारुलेप 8 वृ.वै. जलं Y-Y 'लेपः ········ शिरोरुजम्', अस्मिन्स्थाने "लेपः कांजिकसम्पिष्ट स्तैलयुक्तः शिरोर्त्तिनुत्" इति वृ.वै., यो.त., वृ.यो.त., चक्र च पाठः। 9 ख. उशीर ।

## निम्बपत्रादिलेपः

निम्बपत्रं तिलं दन्ती-त्रिवृत्सैन्धवमाक्षिकैः ।
दुष्टव्रणप्रशमनो* लेपः शोधनकेशरी* ॥५॥

टीका—नीब रा पान, तिल, दांतिए, निशोत, सींधों, सहत सूं लेप कीजै । व्रण उपरि सोधन के करि (लिये) लेप कहीजै ।

## दन्त्यादिलेपः

दन्ती चित्रकमूलत्वक् सुधार्कपयसी[1] गुड़ः ।
Pभल्लातकास्थि कासीसं[2] लेपो भिन्द्याच्छिलामपि[3]Y ॥६॥P

टीका—दांतणी री जड री छालि, चित्रक री जड री छालि, (थूहर का दूध[4]) अर्कदुग्ध, गुल, भिलावां री मोंजी, कासीस[5] उषध स्ममात्रा करि लेप कीजै । [6]सर्वरोगां नै गमावै । (यह लेप शिला को भी तोड़ डालता है)

---

*-* 'प्रशमनो ............... केशरी', अस्मिन्स्थाने ग. ग्रंथे—"परिश्च लेपः शोथशोधनकेसरी" इति पाठ; : शा. "प्रशमनो लेपः शोधनरोपणः" इति पाठः ।

1 शा. यो.र.च. स्नुहृर्क; ख. सुधाकं 2 क. काशीथं 3 क. भिधाच्छिलामपि ग. भिधात् सिला मई । P-P 'भल्लातकास्थि ...... शिलामपि'; अस्मिन् स्थाने शा. "भल्लातकश्च कासीसं सैन्धवं दारणे स्मृतः" इति पाठः यो.र. भल्लातकास्थि-कासीससैन्धवैर्दारणः स्मृतः ॥' इति पाठः; 'भिन्द्याच्छिलामपि', इत्यस्याग्रेऽयं पाठः चरकसंहितायामधिकः—

'बहिर्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम् ॥'

4 ख. गच, सुधा = सेहुण्डः 5 यो.र. में सैंधव भी है ।

Yपाठान्तरम् वृ. वाग्भटे—

'दन्ती-चित्रकमूलत्वक् कासीसार्कस्नुहीक्षीर-भल्लातकास्थि-भिरुष्णैर्लेपः शिलामपि भिनत्ति ।'

### अथ प्रियङ्ग्वादि लेपः[1]

[2]प्रियङ्गवश्चन्दनलोध्रदारु,[2] [3]श्यामाकलिः पाण्डुवटस्य पत्रम्[3] ।
तोयेन[4] पिष्टं सुविलासिनीनां[4] [5]कुर्याच्च वक्त्राणि शशिप्रभानि[5] ॥७॥

**टीका**—प्रियंगु, रतांजनी, लोद, दारुहलद, (श्यामाकली[6] ?) पीला बड रा पान उषध सममात्र पीसि पांणी सुं लेप । [7]चन्द्रप्रभा समान बदन होइ[7] ॥

---

1 क. प्रियंगादि लेपः 2-2 क. 'प्रियंगु-रक्तचंदन-लोद्र-दारु' इति पाठः; ख.'प्रियंगु-वश्चंदन्-लोदमिश्र' इति पाठः । 3-3 क. 'श्यामाकली ·· ···· ' ख. 'कालीयकं पांडुवटस्य पात्रं' इति पाठः । टि. कालीयकं = पीतचन्दनम्, श्यामा = शारिवा ('शारिवायां निशि श्यामाश्यामौ च हरितासितौ'; "श्यामापदेन कृष्णा श्वेताऽपि शारिवा कथ्यते") अथवा प्रियङ्गुः । श्यामाकलिः = गन्धप्रियङ्गुकाकलिका, प्रियङ्गुर्द्विविधः- प्रियङ्गु-गन्धप्रियङ्गुका च । गन्धप्रियङ्गुकाया कलिकानि दाहघ्नानि ।

4-4 क. 'पिष्टानि विलासनीनां', ख. "प्रष्टा च विलसनीना" 5-5 क. 'कुर्वन्तु वक्रानिसप्रभानि', ख. "कुर्विति वक्राणि शशिप्रमाणि ।" 6 क. के 'श्यामाकली' व ख. के "कालीयकं" का अर्थ दोनों टीकाकारों ने नहीं लिखा है । 7-7 ख. मुप (ख) जोति होइ ॥ योगोऽयं ग. ग्रन्थे नोपलभ्यते ।

पाठान्तरम्—

1 'रक्तचन्दन-मञ्जिष्टा-कुष्ठलोध्रप्रियङ्गवः ।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥'
(भै.र., वृ.यो.त., यो.त., शा., ग.नि., वृ.वै., र.र., चक्र. च)

2 "वटस्य पाण्डुपत्राणि मालती रक्तचन्दनम् ।
कुष्ठं कालीयकं लोध्रमेभिर्लेपं प्रयोजयेत् ॥
यौवन-पिटिकानां तु व्यङ्गानां च विनाशनम् ॥" यो.र.

## अथ लोध्रादिलेपः[1]

लोध्रधान्य[4]वचा[4]लेपस्तारुण्यपिटिकाऽपहः ।
*अथवा कुङ्कुमं रक्तचन्दनान्वितमालिपेत्* ।।८।।

टीका—[3]लोद्र, धाणा, वच, (इनका लेप तारुण्यपीटिकाओं का नाश करता है ।[3]
अथवा—) [4]कुंकुम, रक्तचंदन ईयां रो वांटि पाणी सेती लेप कीजई ।
मुष री षील मोटियारपणा री जाई[4] ।।

---

1 शा. चक्र च 'तारुण्यपीटिकाहरलेप' इति नाम । 2-2 र.र. नागबलालेपः; ग.नि. धात्रीवचालेपः । *-* 'अथवा ..........मालिपेत्', अस्मिन्स्थाने शा., र.र., भै.र., चक्र०, यो.र., ग.नि., वृ.यो.त. च—''तद्वद् गोरोचनायुक्तं मरिचं मुखलेपनम्'' इति पाठः। 3-3 ख. लोद, धणीया, वचा लेप मुष कील जाई । अथवा 4-4 कुंकुम, रक्त-चंदनु लेपु मुष कील जाई ।।

इन योगों के पश्चात् 'ग' प्रति में अतिरिक्त योग—

1 पारो टं १, हिंगुलु टं १, विष टं १, कचूर टं. १, चूर्ण कीजे । अलंबुष पुट ३, निर्गुण्डी पुट ३, धतूरा पुट ३, इस प्रकार ६ पुट दीजै । लिंगाग्र (?) लेप करी । कठिन भयो । अथवा वाराहवसा लेपो, कठिन होइ ।

2 फिटकरी टं १, शोरा टं १, तुत्थ टं १, नींबू के रस से घिस कर लेवै (लेपै ?) स्त्री परहेज करै तब वाई फिरंग जाइ ।

3 माहिषी का माखण, कूठ, खिरेटी की जड, कुटकी, वच, सुरमा, हलद, एते सम भाग । महीषी घृत व तेल (?) मांई 21 दिन ना सु लेइ।। स्त्री पतित स्तन उन्नत होइ ।। कठिन विस्तीर्ण होइ ।।*

* (भै.र.–'महिषीभवनवनीत व्याधिबलोग्रा तथैव नागबला ।
पिष्ट्वा मर्दनयोगात् पीनं कठिनं स्तनं कुरुते ।।'
"गोमहिषीघृतसहितं तैलं श्यामाकृताञ्जलिवचाभिः ।
त्रिकटुनिशाभिः सिद्धं नस्यं स्तनवर्द्धनं परम् ।।")

इति लेपाधिकारः

— * —

# अथ पञ्चमोऽधिकारः

## अवलेहाः

### अथ महाभल्लातकावलेहः[1]

*निम्बगोपाऽरुणाकट्वी[2]त्रायन्तीत्रिफलाघनम्* ।
पर्पटाऽवल्गुजानन्ता[3]-वचाखदिरचन्दनम्[4] ॥९॥

पाठाशुण्ठी [5]शटीभार्ङ्गीवासाभूनिम्बवत्सकम्[5] ।
[6]श्यामेन्द्रवारुणीमूर्वा-[7]विडङ्गेन्द्रविषानलम्[7] ॥१०॥

[8]हस्तिकर्णामृता चैव[8] पटोलं रजनीद्वयम् ।
कणाऽऽरग्वधसप्ताह्व[9]-[10]कृष्णा चैवोच्चटाफलम्[10] ॥११॥

---

1 क. महाभल्लातकावलेह; भै.र. महाभल्लातकगुड । 2 वृ.यो.त. (ग.) मृद्वी *-* 'निम्बगोपारुणा ········ घनम्', पाठोऽयं ग.नि. नोपलभ्यते । 3 क. पर्पटा-वल्युजा; भै.र., र.र.च. 'पर्पटी ······ '; वृ.वै. पर्पट्यवलगुजा, 4 क. चारखदिर, (अवल्गुजा = बापचीति लोके) 5-5 क. भागी वासाभूनिम्बजासकं । र.र., भा.प्र., यो.र, भै र., यो.त., बृ.यो.त., वृ.वै.ग.नि.च. 'जासकं' स्थाने "वत्सकम्" पठितम् । 6 क. श्यामंद्र । 7-7 क. विडंगै चविकाठलं, ग. चविकानलम्; र.र. विडगं तु विसानलम्; भां.प्र. विडङ्गेन्द्रयवानलम्; यो.र विडंगातिविषानलम्; बृ यो.त. विडंगानिविषानलम्; ग.नि. बिडङ्गेन्द्रयवं जलम् । ('विडङ्गेन्द्रविषानलम्' = बिडङ्ग-इन्द्रयवं, अतिविषा, चित्रकञ्च;), विडङ्गं चविकानलं = (बिडङ्ग-चव्यं-चित्रकञ्च); 'बिडङ्गं तु विसा (षा) नलम्' = (बिडङ्गं अतिविषा, चित्रकञ्च); 'बिडङ्गेन्द्रय-वानलम् = (बिडङ्गं, इन्द्रयवं, चित्रकञ्च); 'बिडङ्गानिविषानलम्' = बिडङ्ग— (अतिविषा चित्रकं च), बिडङ्गेन्द्रयवं जलम् = (बिडङ्ग, इन्द्रयवं, मुस्तकञ्च ।) 8-8 क. हस्तिकर्णामृताश्चैव; वृ.वै., भा.प्र., भै.र.च. 'हस्तिकर्णामृताद्रेका; र.र. हस्तिकर्णमृतात्रेका ?' बृ.यो.त., यो र.च. हस्तिकर्णामृताब्दाह्व; ग.नि. हस्ति-कर्ण्यमृताद्राक्षा; यो त. हस्तिकर्णामृताद्रेष्का । ('हस्तिकर्णामृताचैव' = हस्तिकर्णपलाशं अथवा रक्तएरण्डअमृता च; 'हस्तिकर्णामृताद्रेका' = हस्तिक. प.—अमृता – महानिम्बं च; 'हस्तिकर्णामृताब्दाह्व' = ह.क प.—अमृता-मुस्तकञ्च; 'हस्तिकर्ण्यमृताद्राक्षा' = हस्तिकर्णी-अमृता-द्राक्षा च; त्रेका—गोरखमुण्डी) 9 क. सप्तानां; र.र. सप्ताश्च, भा प्र., यो.र, भै.र., वृ.यो.त., वृ.वै., ग.नि., यो.त. च सप्ताह्व (र.र. शालिग्राम-महोदयैः सप्ताश्च = अर्कः कथितः, सप्ताह्वः = सतोना इति लोके) 10-10 क. कृष्णा

[1]मञ्जिष्ठा लाङ्गली रास्ना[1] नक्तमालः[2] पुनर्नवा[2] ।
[3]दन्ती बीजकसारञ्च भृङ्गराजं कुरण्टकम्[3] ॥१२॥

※कालशाखोटकं[4] चैव द्विपलांशं प्रकल्पयेत् ।※
×जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम् ॥१३॥×Y

---

**(गतांशः)**
चैवो वटाफलं; ग. कृष्णाचैवोत्वट्फलं, र.र. भै.र., वृ वै., कृष्णवेत्रोच्चटाफलम्, भा.प्र. त्रिवृद्वेत्रोच्चटाफलम्; यो.र., बृ.यो.त. च शिरीषं चोच्चटाफलम्; ग.नि. बिल्वश्योनाकपाटलाः; यो.त, कृष्णामूलोच्चटाफलम्' । (कृष्णामूलं=पिप्पलीमूलं, उच्चटाफलं=श्वेतगुञ्जाफलं, कृष्णवेत्र=कालीबेत इति लोके, शिरीषं=शिरीषत्वक्; कृष्णामूल=पिप्पलीमूलं) ग नि. 'बिल्वश्योनाकपाटला' इति पाठस्याग्रे—'एषां द्विपलिकान् भागाञ्जलद्रोणे विपाचयेत् ॥ अष्टभागावशेषन्तु कषायमवतारयेत्' इत्यधिकः पाठः ।

---

1-1 भै.र., बृ.वै. च 'मञ्जिष्ठा लाङ्गली रास्ना' स्थाने "भूकन्दं तृणपर्णं च" इति पाठः; र.र. 'तृणपर्णं' स्थाने "तिलपर्णं" पठितः (भूकन्द=सूरणं, तिलपर्णं= रक्तचन्दनम् 2-2 भै.र.; बृ.वै.च 'नक्तमालः पुनर्नवा' स्थाने जिङ्गी पद्माटमूपली' इति पाठः; र.र. 'पद्माट' स्थाने "पद्मा च" इति पाठः, (पद्माट=चकवडबीजानि किन्तु पद्मा=स्थलकमलं 3-3 'दन्ती बीजकसारं ····· कुरण्टकम्' अस्मिन्स्थाने र.र., बृ वै, भै.र.च "विष्वक्सेना च कैटर्यं शरपुङ्खाऽथ कञ्चुकी" इति पाठः (दंती=दंतीमूलम्, बीजकसारं=विजयसारं, भृङ्गराजः=भांगरा इति लोके, कुरंटकं= कटसरैया इति लोके; किन्तु विष्वक्सेना=प्रियङ्गुपुष्पाणि, कैटर्यंकट्फलं, कञ्चुकी=शिरीषत्वक्)
14 क. कालसोपोटकं, ग. कङ्काल साखटकं, भा.प्र. अंकोटकञ्च शाखोटं । 15 भा.प्र. पृथक् पृथक् ※-※ 'काल-शाखोटकं ····· प्रकल्पयेत्' पाठोऽयं र.र. यो.र., भै.र., यो.त., बृ.यो.त., बृ.वै.च नोपलभ्यते । ×-× 'जलद्रोणे ·· भागावशेषितम्' अस्मिन् स्थाने—

"एतेषां द्विपलान्भागाञ्जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टञ्च कषायमवतारयेत्" इति, यो.र., र.र., भै.र., यो.त., बृ.यो.त. बृ.वै.च पाठः; भा प्र. 'अङ्कोटकं पृथक् पृथक्' अस्याग्रे—
"गृह्णीयात्तानि सर्वाणि जलद्रोणे पचेच्छनैः।
अष्टमांशावशेषन्तु कषायमवतारयेत् ॥
विधाय वाससा पूतं स्थापयेद् भाजने दृढे, ॥' इति पाठः

ग. ग्रन्थे 'जलद्रोणे ·· च सोषितं (शेषितम्) अस्याग्रे "विधाय वाससा पूतं स्थापयेद्भाजने दृढे" इत्येव पाठः । Y-Y "मञ्जिष्ठा लाङ्गली·················चतुर्भागावशेषितम्', पाठोऽयं ग.नि. नास्ति ।

भल्लातकसहस्राणि[1] च्छित्वा अष्टगुणेऽम्भसि[2] ।
पचेदष्ट'वशेषं[3] तत् कषायमवतारयेत् ॥१४॥

+द्वौ कषायौ समादाय वस्त्रपूतौ च कारयेत् ।+
⊕गुडस्य च तुलां दत्त्वा लेहं संसाधयेद्भिषक् ॥१५॥⊕

[4]भल्लातकसहस्राणां मज्जानं तत्र दापयेत्[4] ।
त्रिकटु त्रिफला मुस्त [5]विडङ्गञ्चित्रकन्तथा[5] ॥१६॥

+सैन्धवं चन्दनं कुष्ठं[6] [7]पलमात्राणि दापयेत्[7] ।+
❀सौगन्ध्यार्थञ्च दातव्यं चातुर्जातम्पलम्पलम् ॥१७॥❀

---

1 ग. सहस्रेकं, 2 र.र. यो.त च त्रीण्यर्मणेऽम्भसि, भा.प्र (च्छित्वा तु) त्र्यर्मणाम्भसि, यो.र. बृ.यो.त.च क्षिपेच्छित्त्वाऽर्मणेऽम्भसि; भै.र. बृ वै.च (भल्लातकसहस्राणि त्रीणि च्छित्त्वाऽर्मणेऽम्भसि किन्तु गदनिग्रहे 'छित्वा द्रोणमितेऽम्भसि' इति पाठः 3 ग. खचेदष्टावशेषेण; र.र., यो.र., भै.र., यो.त., बृ.यो त., बृ.वै., ग.नि.च 'चतुर्भागावशिष्टं तु'; +-+ 'द्वौ कषायौ ……… कारयेत्' अस्याग्रे यो.र., यो त.च "एकीकृत्य कषायौ तौ पुनरग्नावधिश्रयेत्" इत्यधिकः पाठः ; भा.प्र. अस्मिन्स्थाने "तच्च वस्त्रेण संशोध्य द्वौ कषायौ विमिश्रयेत्" इनि पाठः

⊕-⊕ 'गुडस्य……… भिषक्' अस्मिन्स्थाने ग. पुस्तके "गुडस्य चतुः पलं देयं मज्जाभल्लातकं तथा" इति पाठः । भा.प्र. गुडं शतपलं दत्वा लेहवत् तत्पचेच्छनैः ।' यो.र. बृ.यो.त., यो.त.च 'गुडस्यैकतुलां ……।' बृ.वै., भै.र.च "गुडस्य तु तुलां ताभ्यां कषायाभ्यां पचेद्भिषक्"

4-4 क. 'भल्लातकसहस्राणां मजानां‥'; 'भल्लातक……दापयेत्', अस्मिन्स्थाने ग. पुस्तके "संप्पस हस्त मज्जा च गुडमज्जा प्रदापयेत्" इति पाठः '5-5 'बिडंगं चित्रकं तथा'. अस्मिन्स्थाने भै.र.. र.र, यो.त., बृ.वै,. ग.नि.च "सैन्धवानां पलं पलम्" इति पाठः। 6 क. कुष्ठां 6 ग…प्रदापयेत् । 7-7 भा.प्र., यो.र., बृ.यो.त. च "दीप्यकञ्च पलं पलम्" इति पाठः +-+र.र., भैर.. बृ.वै. च 'दीप्यकस्य पलञ्चैव चातुर्जातं पलं तथा' । यो.त. "विडङ्गं चित्रकं कुष्ठं चन्दनञ्च पलं पलम्'' इति पाठः ❀-❀सौगन्ध्यार्थं…… पलम्' अस्मिन्स्थाने "चातुर्जातं च सञ्चूर्ण्य घृतभाण्डे निधापयेत् ।
सौगन्धिकस्य दातव्यं चूर्णं पलचतुष्टयम् ।।" इति
यो.र., बृ.यो,त. च पाठः ; 'सौगन्धिकस्य दातव्यं चूर्णं पलचतुष्टयम् । दीप्यकस्य पलञ्चैव चातुर्जातं पलांशकम् ।।' इति ग.नि., यो.त. च पाठः । अस्मिन्स्थाने भै.र. 'सञ्चूर्ण्य प्रक्षिपेदत्र गन्धकं च चतुः पलम् ।' बृ.वै. "कन्दकञ्च" इति पठित;

❀सञ्चूर्ण्य[1] प्रक्षिपेत्, लेहं[2] घृतभाण्डे निधापयेत् ।❀
महाभल्लातको ह्येष[3] महादेवेन निर्मितः[4] ।।

प्राणिनाञ्च हितार्थाय, जयेच्छुघ्र[5] निषेवितः ।
चित्रमौदुम्बरं[6-7] दद्रुमृष्यजित्[8] किन्नु काकणम्[8] ।१९।।

पुण्डरीकं[9] च चर्माख्यं[9] विस्फोटं रक्तमण्डलम्[10] ।
कण्डू[11] कपालकं कुष्ठं[11] पामानं च[12] विपादिकाम्[12] ।।२०।।

+वातरक्तमुदावर्त्तं[13] पाण्डुरोगं व्रणं[14] क्रिमीन् ।+
अर्शांसि षट्प्रकाराणि[15] कासं श्वासं भगन्दरम् ।।२१।।

समाभ्यासेन[16] पलितमामवातं च दुर्जयम् ।
❀एष निर्यन्त्रणः प्रोक्तः सर्वकाले प्रशस्यते ।।२२।।❀

---

1 पो. त. सम्मेल्य 2 ग. नि., यो. त-च 'कोष्णे', र. र. सिद्धे । ❀-❀'सञ्चूर्ण्यं ........निधापयेत् अस्मिन् स्थाने भै. र., वृ. वै. च "स्निग्धभाण्डे विनिक्षिप्य स्थापयेत्कुशलो भिषक्" इतिपाठः, पाठोऽयं वृ-यो.त. न दृश्यते । 3 क ह्येष 4 क. निर्मितं; भा.प्र. भावितः 5-5 क. जयेदेतन्निषेवनात् ग. जयेदेतानि सेवनात् ।। 6 र.र.. भै. र., वृ. यो. त., वृ. वै., ग. नि. च चित्रस्थाने श्वित्र-इति पाठः । 7 ग. नि. दद्रु-स्थाने 'सिध्मं' इति पाठः । 8-8 'ऋष्यजिह्वं सकाकणम्' इति ग' पुस्तके, र. र., यो. र.. वृ-यो.त. च पाठः

9-9 क. मुंडीकं च तु चामय्यं; वृ वै. चर्माख्यं स्थाने मर्माख्यं पठितः 10 र. र., भै. र., वृ. वै. च मण्डलं तथा । 11-11 क. कुचुकपालकुटं च; ग. कण्डु-कपाल-कुष्ठानां, यो. र., वृ. यो. त., यो. त. च 'कृच्छ्रं कापालिकं कुष्ठं इति पाठः, ग. नि 'कुष्ठं' स्थाने "कृष्ण" इतिपाठः, वृ. वै. कण्डूं कपाल—गण्डूञ्च, इति पाठः 12-12 क. ग. चर्चिकादिकं 13 षडर्शांसि 14 यो. र. वमीन्, ग. नि., यो. त. च वमि++-'वातरक्त ..........क्रिमीन्' पाठोऽयं वृ-यो.त. न दृश्यते 15-15 भा. प्र. रक्तपित्तमुदावर्तं ।

37 'सदाभ्यासेन' इति र,र., भा. प्र; 'तदभ्यासेन' इति भै. र., वृ-वै. च । क. समाभ्यासनपलितः ❀❀ 'एष ..........प्रशस्यते', अस्मिन्स्थाने भा. प्र.
"निर्यन्त्रणस्तु कथितो विहाराहारमैथुने ।

पाठोऽयं भै. र., वृ. वै., ग. नि च नोपलभ्यते ।

कुरुते परमां कान्तिं दीपयेज्जठरानलम्।
×अनुपानं[1] प्रयोक्तव्यं छिन्नातोयं[2] पयोऽथवा ॥२३॥×

टीका :—नीमछालि, गोरीसर, अलसी, कटुक, त्राहमाण, हरडै, बहड़ा, आंवला, मोथ, पित्तपापडौ, जवासो, बावची, बच, खयरसार, चंदन, पाठ, सुंठी, (शटी) भाडंगी, अरडूसौ, किराइतौ, जासूफूल ? निसोत, पुवणि री जड़ (इन्द्रवारुणी), मूर्वा, विडंग, चविक, चित्रक, रातो एरंड (हस्तिकर्ण) गिलोइ, पटोल, हलद, दारुहलद, पीपली, किरमालौ, सोवा ? (सप्ताह्व) उटींगण ?, (मूल पाठ क. पुस्तक का, "कणारग्वधसप्तानां कृष्णा चैवोवटाफलम्" है । टीकाकार का 'कणारग्वध' तक का अर्थ उपयुक्त है किंतु 'सप्तानां' को "सोवा" व 'उवटाफल' को उटींगण कहना उचित नहीं है । अन्य ग्रंथों का पाठ, 'कृष्णवेत्रोच्चटाफलम्' है । कृष्णवेत्र=कालीवेत व उच्चटाफलम्=श्वेतगुञ्जाफल) मजीठ, राठागारी ? (लांगली=कलिहारी), राठ, करज री जड़, साटी, दांतणि, विजैसार, भांगरौ, कंटासेलीयौ, (क. के पाठ में इसके पश्चात् 'कालसोषोटक' चैव भी है, व ग. के पाठ में 'कंकालसाषटकं चैव है । भाव प्रकाश में इसके स्थान पर 'अङ्कोटकं च शाखोटं' है । अङ्कोटक=ढेला या अंकोल, शाखोट=सहेरा) उषध सम मात्रा टां २० करणां, पाणी टां ४०९६ (एक द्रोण), तिण रो चातुर्थांस लीजै, भीलावां एकसहस्र तिणहुंती आठगुणो पाणी घाति उकालीजे । अष्टावशेष लीजै । पछै बेवरियां कषाय (दोनों कषायों को) छाणि नइ एकंत्र कीजै । गुड टां १६००

---

1 ग., र. र., भै-र. भा. प्र, वृ-वै., गनि. च अनुपाने 2 ग., र.र., भै.र., वृ.वै. च; क्वाथं × × 'अनुपानं ......... पयोऽथवा', अग्रे—र. र. "अम्लं च सर्वथा त्याज्यं शाकमेव विशेषतः । इति पाठ। ; भा. प्र. 'भोजने तु सदा त्याज्यमुष्णमम्लं विशेषतः' इति पाठः, बृ. यो. त. यो, र. च भोजने न सदा योज्यमुष्णं चाम्लं विशेषतः । इति षाठः; भै. र. 'भोजने च तथा योज्यमुष्णं चान्नं विशेषतः ।। इति पाठ; वृ. वै. 'भोजने व सदा भोज्यमुष्णं चान्नं विशेषतः ।' इति पाठ; ग. नि. भोजने च सदा त्याज्यमुष्णं चाम्लं विशेषतः इति पाठः ।

(१ तुला) भेला करिनै पाती कीजै । पछै वले भिलावा सहस्रएक भांति करि तियां री मींजी मांहि भेलीजै । (जो उबाले गये थे उनहीं हजार भिलावों की मज्जा मिलावें) पछै उपरा उषध वीजा भेला कीजै —यथा—त्रिगडू, त्रिफला, मोथ, वाइविडंग, चित्रक, सीधौ, सूकडी, वूठ, टां १०, एलचो, तज, तमालपत्र नागकेशर टां १० एता उषध भेला करि चीकटे बासणी मांहिघाली राखीजै । अठारह कुष्ठ जाई । वीजा ही जिकै गुण कह्या छै सु षरा जाणीजै ।

### अथ अमृतभल्लातकावलेहः

सुपक्वभल्लात-फलानि[1] चैव
द्विधा विदार्याढकसम्मितानि[2] ।
विपाच्य[3] तोयेन चतुर्गुणेन चतुर्थशेषंव्यपनीयतानि[4] ।।२४।।

पुनः[5] पचेत्क्षीरचतुर्गुणेन
घृतांशयुक्तेन घनं[6] यथा स्यात्[7] ।
सितोपला षोडशभिः पलैश्च
विमिश्र्य[8] संस्थाप्य दिनानि सप्त ।।२५।।

ततः प्रयुज्याग्निबलेन[9] मात्रां[10]
जयेद्विकारानखिलान्[11] गुदोत्थान्[11] ।
केशान्[12] सुनीलान्[13] घनकुञ्चितांश्च[14]
सुपर्णदृष्टिं[15] च शशांककान्तिम्[16] ।।

---

1 क. सुपकभलात 2 क. विदार्यादक 3 क. विपच्य 4 क. चतुर्थसेप; ग. चतुर्थशेष्या 5 क. पठे 6 क. घन 7 ग. वत् 8 ग. तिमिश्र, क. विमिश्र 9 क. प्रजुज्या 10 क. ग. मात्रं 11-11 क. 'जयेद्विकांकाशानखिलान गुदोद्धान्' । ग. 'जयेत् काशान् अखिलान् गुदोक्षदोषः' । 12 क. केशान, कसेन् 13 क. सुलीलान 14 क. कुचिता च 15 ग. सुपूर्णद्रष्टि 16 क. सशांककानि ।

वेगो[1] हयानाञ्च बलं[2] गजानां
स्वरो[3] मयूरस्य हुताशदीप्तिः ।
स्त्रीवल्लभत्वं विविधां प्रजां च
नीरोगतां द्वि-त्रिशतायुषञ्च ॥२७॥

न चान्नपाने परिहार्यमस्ति[4]
न[5] चातपे चाध्वनि[5] मैथुने च ।
प्रयोगकाले सकलामयानां
राजाह्वयं[6] सर्वरसायनानाम् ॥२८॥

टीका :—भिल्लावां टं १०२४, द्विधा करि पाणी टां ४०९६ पचाईजे, वले (फिर) चतुर्गुणदूध माहे पचावीजई । पछै चीकणाई वासणे घाति राषी जइ । गुण पाठ मांहे विचार जोवणा । (मूल पाठ में दूध में घृत १ अंश डाल कर पचाने का, फिर मिश्री १६ पल मिलाने का आदेश है)

---

1 क. वेगं 2 क. ग. बल कुंजराणां 3 क-स्वयं 4 क, ग. परिहारमस्ति 5-5 क. न चाग्रपेताध्वनि, ग. न चातपेन ध्वनि, 6 क. राजहृवयम्, ग. राजो ह्वयं ।

पाठान्तरम् भ. प्र.—

'भल्लातकप्रस्थयुगं छित्वा द्रोणजले क्षिपेत् ।
प्रस्थद्वयं गुडूच्याश्च क्षुण्णं तत्राम्भसि क्षिपेत् ॥
चतुर्थांशावशेषं तु कषायमवतारयेत् ।
वस्त्रपूते कषाये तु वक्ष्यमाणं विनिक्षिपेत् ॥
शरावमात्रकं सर्पिर्दुग्धं स्यामाढकं तथा ।
सितां प्रस्थमितां दद्यात्प्रस्थार्द्धं माक्षिकं क्षिपेत् ॥
सर्वाण्येकत्रभाण्डे तु पचेन्मृद्वग्निना शनैः ।
सर्वद्रवे घनीभूते पावकादवतारयोत् ॥
तत्र क्षेप्याणि चूर्णानि ब्रूमो बिल्वविषामृताः ।
वाकुची चाथ दद्रुघ्नः पिचुमर्दो हरीतकी ॥
प्लक्षो धात्री च मञ्जिष्ठा मरिचं नागरं कणा ।
यवानी सैन्धवं मुस्तं त्वगेला नागकेशरम् ॥

### अथ दशाङ्गामृतहरीतकी[1]

द्वौ भागौ च हरीतक्या चतुर्भागो[2] विभीतकः[3] ।
अष्टौ चामलकानान्तु सिता चामलकीसमा ॥२६॥

---

1 क. दशांगमृत 2-2 क. चतुर्भागा विभीतको 3-3 अष्टाचामलकानां

पर्पटं पत्रकं बालमुशीरं चन्दनं तथा ।
गोक्षुरस्य च बीजानि कर्चूरो रक्तचन्दनम् ॥
पृथक्पलार्द्धमानानां चूर्णमेषामिह क्षिपेत् ।
पलमात्रमितं प्रातः समश्नीयाज्जलेन हि ॥
नाशयेदवलेहोऽयं पथ्यान्यन्नानि खादतः ।
कुष्ठानि वातरक्तानि सर्वाण्यर्शांसि सेवितः ।
व्यायाममातपं वह्निमम्लं मांसं दधिस्त्रियम् ।
तैलाभ्यङ्गं तथाध्वानं नरो भल्लातकी त्यजेत् ।

पाठान्तरम् भै. र.—

भल्लातकानां पवनोद्धतानां वृन्तच्युतानां च यदाढकं स्यात् ।
तच्चेष्टकाचूर्णकणैर्विघृष्य प्रक्षाल्य शोषाय सृजेत् प्रवाते ॥
शुष्कं पुनस्तद् विदलीकृतं च ततः पचेदप्सु चतुर्गुणासु ।
तत्पादशेषं पुनरेव शीतं क्षीरेण तुल्येन पुनः पचेत्तु ॥
तत्पादशेषं पुनरेव शीतं घृतेन तुल्येन पुनः पचेत्तु ।
तदर्द्धया शर्करया विकीर्णं ततः खजेनोन्मथितं विधाय ॥
तत्सप्तरात्रादुपजातवीर्यं सुधारसादप्यधिकत्वमेति ।
प्रातर्विशुद्धः कृतदेवकार्यो मात्रां च खादेत् स्वशरीरयोग्याम् ॥
न चान्नपाने परिहार्यमस्ति न चातये चाध्वनि मैथुने च ।
यथेष्टचेष्टो विहितोपयोगाद्भवेन्नरः काञ्चनराशिगौरः ॥
अनन्यमेधा नरसिंहतेजा हृष्टेन्द्रियोऽव्याहतबुद्धिसत्त्वः ।
दन्ताश्च शीर्णाः पुनरुद्भवन्ति केशाश्च शुक्लाः पुनरेव दिव्याः ।
विशीर्णकर्णाङ्गुलिनासिकोऽपि कृम्यर्दितो भिन्नगलोऽपि कुष्ठी ।
सोऽपि क्रमादङ्कुरिताग्रशाखस्तरुर्यथा भाति नवाम्बुसिक्तः ॥

यष्टी च पिप्पली चैत्र स्नु[1]-(तुक् ?) क्षीरी चैकभागिका[2] ।
भक्षयेन्मधुसर्पिभ्यां रात्रौ खादेत्तु[3] यत्नतः ॥३०॥

एषा चक्षुः प्रदाऽवश्यं[4] विशेषान्नेत्ररोगिणाम्[5] ।
तिमिरे[6] पुष्पे[7](?) तथा काचे[8] पटले[9](?) अर्बुदेऽपि[10] च ॥३१॥
सर्वेषु नेत्ररोगेषु दशामृतहरीतकी[11] ॥

-टीका :—हरडै भाग २, बहेडा भाग ४, आवला भाग ८, निवात (सिता) भाग ८, जेठीमधु भाग १, पिप्पली भाग १, वंशलोचन भाग १, उषध बांटि छाणि सहत अरु भेला घृत लीजै। उषध टां ४ तथा ५ लीजै।

### अथ अगस्त्यहरीतकी[12]:

हरीतकी शतं भद्रं[13] यवानामाढकन्तथा[13] ।
पलानि दशमूलस्य विंशतिः सन्नियोजयेत् ॥३२॥

चित्रकं पिप्पलीमूलमपामार्गः शठी तथा ।
कपिकच्छुः[14] शङ्खपुष्पी भार्ङ्गी च गजपिप्पली ॥३३॥

---

1 क. स्नुक्षीरी ? 2 क. चैव 3 क. खादेतु 4 क. वस्याद् 5 क. विशेषानेत्ररोगिणम् 6 प्रथम-द्वितीयतृतीयपटलगतरोगविशेषः 7 पुष्पे ?— पिष्टं—'शुक्ले पिष्टं समुन्नतम् ? पिल्लं ? पक्ष्मशातं ? 8 काचः तृतीय—चतुर्थपटलस्य रोगः 9 क. पलटे 10 वर्त्मार्बुदः 11 क. दसा.

टि- ग्रन्थकृता 'दशाङ्गामृतहरीतकी'ति नामनि योगे नवद्रव्याण्येव चोक्तानि— दशमद्रव्यस्य नामोल्लेखोऽपि नऽकारि।

12 क. अगस्तिहरीतक्यावलेह 13 क. चन्द्रं 13 क. जवानी माढकं 14 क. कपिकच्छु

बला[1] पुष्करमूलञ्च पृथक् द्विपलमात्रया ।
पचेत् पञ्चाढके तोये[2] यवै: स्विन्नै: शृतं नयेत्[2] । ३४॥

[3]तच्चाभया शतं[3] दद्यात् क्वाथे तत्र विचक्षण:[4] ।
सर्पिस्तैलाष्टपलकं[5] क्षिपेद्[6] गुडतुलां तथा ॥३५॥

पक्त्वा[7] लेहत्वमानीय[7] सिद्धे[8] शीते[8] पृथक् पृथक् ।
क्षौद्रं च पिप्पलीचूर्णं दद्यात्कुडवमात्रया[9] ॥३६॥

हरीतकी द्वयं खादेत् तेन लेहेन नित्यश: ।
क्षयं कासं ज्वर श्वासं हिक्कार्शोऽरुचिपीनसान्[10] ॥३७॥

ग्रहणीं[11] शमयत्येष[11] वलीपलितनाशन:[12] ।
बलवर्णकर: पुंसामवलेहो रसायन: ॥३८॥

विहितोऽगस्त्यमुनिना सर्वरोगप्रणाशन: ॥३९॥

---

1 क. वचां 2 क. चतुर्थाशं सृतं नयेत्, शा., यो. तच., ग 'यवै: स्विचनै: ....' 3-3 क. दभयगां शृतं 4 क. विनिक्षिपेत् 5 क. पलाकं 6 क. क्षिरवां 7 क. पक्त्वालैहत्वमानीया 8-8 क, सिधं, शीतं 9 क. कुहच 10 क. पानशात् । 11 क. ग्रहणीसामयत्येष 12 क. नासनं ।

पाठान्तरम् :—यो. र. वृ. वै., चक्र, भै. र., र, र. ग. नि. च ।

"दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम् ।
हस्तिपिप्पल्यपामार्ग—पिप्पलीमूलचित्रकान् ॥

भार्ङ्गी पुष्करमूलञ्च द्विपलांशं यवाढकम् ।
हरीतकी शतंचैव जले पञ्चाढके पचेत् ॥

(ग. नि. र. र., चक्र-च 'हरीतकी शतञ्चैकं')

यवै: स्विन्नै: कषायं तु पूतं तच्चाऽभयाशतम् ।
पचेद्गुडतुलां दत्वा कुडवञ्च पृथग्घृतात् ॥

तैलात् सपिप्पलीचूर्णात् सिद्धे शीते च माक्षिकात् ।
कुडवं, पलमानञ्च चातुर्जातं समावपेत् ॥

लिह्याद् द्वे चाभयेनित्यं तत: खादेद्रसायनात् ।
तद्वलीपलितं हन्यात् वर्णायुर्बलवर्द्धनम् ॥

टीका :—हरडै मोटी टां १००, ग्रजवाइण टां १०२४ (ग्रजवाइण के स्थान पर; ग. प्रति में व शार्ङ्गधर में, जिससे ग्रंथकार ने पाठ लिया है, 'यव एक ग्राढक' पाठ है—वही शुद्ध पाठ है क्योंकि यो. र. चक्र; वृ. वै., यो. त., ग. नि., भै. र. र, व बृ. यो. त. में भी 'यव' ही कहा गया है), पाटला टा २०, टीटू टां २०, सालिवनि टां २०, पीठवनी टां २०, रींगणी वेऊ (दोनों) टाँ ४०, वीलगिर टां २०: ग्ररणी टां २० काँटी टां २०, गंभारी टाँ २०, चित्रक टां २०, पीपलामूल टा २० ग्राजाभ्राडौ (ग्रपामार्ग), सठि टां २०, कौंछबीज टां २०, संषाहोली टाँ २०. भाडंगी टां २०, गजपीप्पलि टाँ २०, बच टां २०, पूहकरमूल टां २०, पाणी टां ५१२०, (वच के स्थान पर ग. में बला है व ग्रन्य ग्रंथों में भी बला ही कही गयी है।) चाढीजई। जिवारइ पाणी चाढीजै तिवारै उषध पण माहि घालोजै। पछै पाणी रो भाग ४ (चतुर्थांश) रहै तिण मांहि गुड टां १६०० भेली पाती कीजै पाति करि नै घृत टां ४० ? सरसव रो तेल टां ४० ? (मूल पाठ में 'सर्पिस्तैलाष्टपलकं' है) भेलीजै। (मूलपाठ में यहां पर शहद व पिप्पली चूर्ण १-१ कुडव ग्रौर है) पछे लेह मांहै हरडै छै सु विछाईजै। थोडी सी पाती ही साथि वाटीजै। पाठ मांहि गुणछै सु सही जाणीजै।

---

पञ्चकामान् क्षयान् श्वासान् हिक्काञ्च विषमज्वरान्।
हन्यात्तथा ग्रहण्यर्शो हृद्रोगारुचिपीनसान्॥

(ग. नि. हन्यात्तथा स्थाने 'गुल्ममेह' इति पाठः)
ग्रगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम्॥"

'ग्रगस्त्य ·········रसायनम्' ग्रस्मात् परं बृ. वै.—

"यथोद्दिष्टं गुणं कुर्वन् पितं प्रकुरुते यदि।
तदा साय गुडो योज्य एष एवाऽल्पमात्रया॥" इत्यधिकः पाठः,

र. र. ग. नि. च टि. 'यवहरीतक्योः श्लक्ष्ण—पोट्टलीं बद्ध्वा निक्षिपेत्। पश्चात् स्विन्नहरीतकीं घृततैलाभ्यां भर्जयेदिति'—

अथ भाङ्ग्र्याद्यवलेहः[1]

शतं[2] सङ्गृह्य[3] भाङ्ग्र्यास्तु दशमूल्यास्तथा परम्[4] ।
शतं हरीतकीनाञ्च पचेत्तोये चतुर्गुणे ।।४०।।

पादशेषे[5] ततस्तस्मिन्[5] रसे वस्त्रपरिस्रुते[6] ।
आलोड्य[7] च तुलां पूतां गुडस्य त्वभयास्ततः[8] ।।४१।।

पुनः पचेत्तु[9] मृद्वग्नौ यावल्लेहत्वमाप्नुयात् ।
शीते च मधुनस्तत्र[10] षट्पलानि प्रदापयेत् ।।४२।।

त्रिकटुत्रिसुगन्धञ्च पलिकानि पृथक् पृथक् ।
कर्षद्वयं यवक्षारं[11] सञ्चूर्ण्य[12] प्रक्षिपेत्ततः[13] ।।४३।।

भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत् ।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा ।।४४।।

❀स्वरवर्णप्रदो ह्येष जठरानलदीपनः[14] ।❀
हरीतकी शतंकस्यवारिप्रस्थमिहाऽधिकम्[15] ।।४५।।
हरीतकीशतं तद्वत् साधयेद्भिषगुत्तमः ।।४५।।

---

पादशेषे कषायेऽत्र स्विन्ना विद्याद्धरीतकीः ।
भर्जितास्तिलतैलस्य कुडवे गोघृतस्य वा ।।

पचेताम्रमये पात्रे ह्यापाकाल्लोहितोदयात् ।
फलानां तु शतं संख्या चातुर्जातं पृथक्पलम् ।।
बद्ध्वा पोटलके पथ्या यवान् स्विन्नांश्च कारयेत् ।

1 क. भाडंगादि अवलेह, ख. भरंग्यावलेह, भै. र. भार्ङ्गीगुड. 2 क. सतं 3 क. संगृह्या 4 ग., भै. र., भा. प्र. च. शतम् 5-5 ग., भा. प्र., चक्र., भै. र. वृ. वै. च. पादावशेषे तस्मिंस्तु 6 क. परिप्लुते 7 क. आलोड्या, ख. 'आलो-अचरुतिपूता' 8 क. त्वभवातत:, ख. त्वभवानतः 9 क. पचेतु 10 क. मधुना चात्र 11 क. जवक्षारं 12 क. सञ्चूर्णं 13 क. प्रक्षिपेत्तत्, ख. प्रक्षेपतत्त 14 क. दीपनं ❀❀'स्वरवर्ण ··· दीपनः', अस्मातपरें ग. ग्रन्थे, भा. प्र., भै. र, च "नाम्ना भार्ङ्गीगुडः ख्यातो भिषग्भिः सकलैर्मतः ।" इत्यधिकः पाठ', भा. प्र. 'दीपम्', अस्मात् परं "अर्शांस्य रोचकं गुल्मं शकृद्भेदं क्षयं तथा" इत्यधिकः पाठः, अग्रे नाम्ना ········· सकलैर्मतः' इति पाठः 15 क. चत्रारिप्रस्थ प्रियाहधिकं । चक्र. टि. 'पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते । हरीतकी शतस्यात्र प्रस्थत्वादाढकं जलम्' इति पाठः ।

टीका— भाडंगी टां '१०००, दशमूलो टां १०००, हरडै थान (अदद) १००० (मूलपाठ में ये १००-१०० हैं) पाणी टां ४००० अथवा टां १६००० ? (उसमें १ तुला गुड डाल कर हरड़ों को मृद्वग्नि से लेह बनने तक पचावे, शीतल होने पर) सहित टां ६०, सूंठी टां १०, मिरच टां १०, पीपली टां १०, तज टां १०, पत्रज टां १० एलची टां १०, यवखार टां १० (मूल पाठमें 'कर्षद्वय' है=टां ५) (ये द्रव्य उक्त लेह में मिलावें)। हरडै १ खाईजै अथवा टां ५ खाईजै। पाक पाक री विधि कीजै। (१ हरड़ खाकर आधा पल यह लेह खावें)। गुण पाठ माहि कह्या छै सु थाई ।।

अथ कण्टकार्यवलेहः[1]

कण्टकारीं तुलां नीरद्रोणे पक्त्वा[2] कषायकम् ।
पादशेषं[3] गृहीत्वा च तस्मिंश्चूर्णानि[4] दापयेत् ।। ४६ ।।

पृथक् पलांशान्ये[5]तानि गुडूचीचव्यचित्रकाः ।
मुस्ता कर्कटशृङ्गी च त्र्यूषणं धन्वयासकम् ।। ४७ ।।

भार्गी रास्ना शटी चैव शर्करा पलविंशतिः ।
*प्रत्येकञ्च पलान्यष्टौ [6]पिप्पलीनां चतुष्पलम्[6] ।।४८।।*

---

( अगस्त्यहरीतकी )

पाठान्तरम् ग. नि.—

'द्विपञ्चमूलेभकणात्मगुप्ताभार्गीशटीपुष्करमूलविश्वाः ।
पाठामृताग्रन्थिकशङ्खपुष्पी—रास्नाग्न्यपामार्गबलायवासान् +।।
द्विपालिकानेव यवाढकं च हरीतकीनां च शतं गुरूणाम् ।
द्रोणे जलस्याढकसंयुते तु क्वाथीकृते पूतचतुर्थभागे ।।
पचेत्तुलां शुद्धगुडस्य दत्वा पृथक्सतैलात्कुडवं × घृताच्च ।
चूर्णं च तावन्मगधोद्भवानामनेकरोगौघमथाशु हन्यात् ।।

1 क. कंटकार्यविलेह 2 क. क्वाथ 3 क. पादेसेपं 4 क. तस्मिन् चूर्णनिधापयेत् 5 क. पलांशानेतानि 6 6 पिप्पलीनां चतुष्पलं', अस्मिन्स्थाने ख. ग्रन्थे, भा. प्र., यो. र. भै. र., शा. च "प्रदद्याद्घृततैलयोः" इति पाठः । **'प्रत्येकं ......... चतुष्पलम्, अस्मात् परं भा.प्र., यो.र., शा, ख. पुस्तके च 'पक्त्वा लेहत्वमानीयं शीते मधु पलाष्टकम् । चतुष्पलं तुगाक्षीर्याः पिप्पलीनां चतुष्पलम् । इत्यधिकः पाठः ।
+यवासानु = जवासा इति लोके × कुडवं = ४ पल

क्षिप्त्वा निदध्यात् सुदृढे मृण्मये भाजने शुभे ।
लेहोऽयं हन्ति हिक्कार्त्ति-कासश्वासान् विशेषतः ।।४६।।

( अगस्त्यहरीतकी )

यद्राजयक्ष्मग्रहणीप्रदोषःशोफाग्निमान्द्यस्वरभेदकासान् ।
पाण्ड्वामयश्वासशिरोक्षिरोगान् हृद्रोगहिक्काविषमज्वरांश्च ।।
मेधाबलोत्साहमतिप्रदं च चकार चैतं भगवानगस्त्यः'

पाठान्तरम् वृ. यो. त.

'शङ्खाख्या-दशमूल-पुष्करशठी-कासस्वगुप्नाबला—
पामार्गेभकणामृतौषधवृकीग्रन्थ्यग्निभार्गीरसाः ×
आप्राप्थ्यशतं यवाढकमपां पञ्चाढकं वा यव—
स्वेदात्पाच्यमिमाः शिवाः स च रसो गौडीतुलाव्यञ्जलिः ।
कृष्णातैलघृतात्पुनः कुडविकक्षौद्रैरगस्त्याभयाः ।।
कासार्शोग्रहणीक्षयज्वरजराश्वासप्रतिश्यारुचौ ।
× रसा—पाठा अथवा रास्ना

पाठान्तरम् ग. नि.— ( कण्कार्यवलेहः )

'समूलफलशाखान्तु कुट्टयेत्कण्टकारिकाम् ।
तां पचेत्सलिलद्रोणे चतुर्भागावशेषिताम् ।।
कषायं च परिस्राव्य पुनरग्नावधिश्रयेत् ।
युक्त्या घृतं च दातव्यं कल्कं चैषां प्रदापयेत् ।।
दुरालभा गूडूची च त्र्यूषणं चित्रकस्तथा ।
रास्ना कर्कटशृङ्गी च पिप्पलीमूलमेव च ।।
एतान्येकपलिकानि तथा फाणितशर्कराम् ।
पलानां विंशतिं दत्त्वा तं लेहं सान्द्रमुद्धरेत् ।।
शीते दद्यात् पिप्पलीनां चूर्णं चात्र गुडान्वितम् ।
कुडवं तु तुगाक्षीर्या मधुनः कुडवं तथा ।।
तं लिह्यान् मात्रया लेहं पञ्चकासनिवारणम् ।
हृद्रोगानाहहिक्काश्च श्वासं चैवापकर्षति ।।'

टीका— बैठी रींगणी टां १६००, पाणी टां ४०९६, गिलोइ टां १०, चविक टां १०, चित्रक टां १०, सठि टां १० मोथ टां १०, काकडासिंगी टां १०, त्रिफला टां ३०, धमासो टां १० भाडंगी टां १०, राठी टां १०, शठि टां १०, निवात टां २००, गाइ रो धृति टां ८०, सरसव रो तेलि टां ८०, सहित टां ८०, वंशलोचन टां ४०, पीपली टां ४० (गाय का घी, सरसों का तैल व मधु क. ग्रंथ के पाठ में नहीं हैं, किंतु अन्य ग्रंथों में है। प्रतिलिपिकर्ता श्लो ४८ को ठीक तरह न लिख सका है) पाकां री करण षावण री विधि एक हीज छइ। गुण पाठ माहे जोय लेणा।

अथ च्यवनप्राशावलेह:[1]

पाटलाऽरणिकाश्मर्य[2]—बिल्वारलुकगोक्षुरा:[3]।
[4]पर्ण्यौ बृहत्यौ पिप्पल्य:[5] शृङ्गीद्राक्षामृताभया:[6] ॥५०॥

*बला भूम्यामली वासा ऋद्धिर्जीवन्तिका शठी।*
जीवकर्षभकौ मुस्तं पौष्करं काकनासिका ॥५१॥

मुद्गपर्णी[7] माषपर्णी विदारी च पुनर्नवा[8]।
[9]काकोल्यौ [10]कमलं [11]मेदे सूक्ष्मैलागुरुचन्दनम् ॥५२॥

एकैकं पलसम्मानं [12]स्थूलचूर्णितमौषधम्[12]।
एकीकृत्य महापात्रे[13] पञ्चामलशतानि च ॥५३॥

[14]पञ्चद्रोणं जलं क्षिप्त्वा ग्राह्यमष्टावशेषितम्[15]।
ततस्तु [16]तान्यामलानि निष्कुलीकृत्य वाससा ॥५४॥

---

1 क. च्यवनप्राशनावलेह: 2 क. काश्मर्या 3 क. गोक्षुरां 4 पर्णा 5 ग. द्वौ पल्या 6 क. मृताभया **'बला ......... ....... शठी,' अस्मिन्स्थाने क. पुस्तके "वातारि-भूम्यावलीकं स्याद्धिजीवंतिका शठी" इति पाठ:; ग. पुस्तके "बला भूम्यामलीकं स्यात् द्विजीवन्तिका शटी" इति पाठ: 7 क. मुग्धपर्णी 8 पुन्नर्नवा 9 क. काकोली 10 क. कमले 11 क. मेदा 12-12 क. अशस्याभाव:। ग. ग्रंथे 'सूक्ष्मचूर्णीकृतोषधम्'; 13 क. मृड्डत्पात्रे 14 ग. शा. च 'पचेद् द्रोणजले' इति पाठ: 15 क. शेषत: 16 क. 'ताभ्यां मलामीनि:कुलीकृतवासस: इति पाठ:, ग. ग्रंथे 'तत्रामलं पुन: ग्राह्यं समस्त निकुलीकृतम्' इति पाठ:।

दृढ़हस्तेन [1]सम्मर्द्य क्षिप्त्वा [2]तत्र ततो घृतम्[2]।
✽पलसप्तमितं तानि किञ्चिद्भृ[3]ष्ट्वाऽल्पवह्निना ॥५५॥ ✽

ततस्तत्र[4] क्षिपेत्क्वाथं [5]खण्डं चार्द्धतुलोन्मितम्[5]।
लेहवत् साधयित्वा च चूर्णानीमानि[6] दापयेत् ॥५६॥

पिप्पली द्विपला देया[7] तुगाक्षीरी चतुष्पला[8]।
+प्रत्येकञ्च पलं (?) प्रोक्तः[9] षट्पलं मधु प्रक्षिपेत्[9] ॥५७॥+

[10]इत्येतच्चवनप्रोक्तः[10] [11]च्यवनप्राशसंज्ञकम्[11]।
लेहं वह्निबलं दृष्ट्वा खादेत्[12] क्षीणो[12] रसायनम् ॥५८॥

×बाल-वृद्ध-क्षत-क्षीणा नारीक्षीणाश्च ये नराः[13]।×
हृद्रोगिणः[14] स्वरक्षीणा ये [15]नरास्तेषु युज्यते[15] ॥५९॥

---

1 क. सम्मर्द्य, 2-2 ग. सप्तपलं घृतं । 3 क, भष्टा ✽✽पलसप्तति ........... वह्निना' अस्मिन्स्थाने ग. ग्रंथे "मद्वह्नि पाचायेद् किंचित् हस्तैर्मर्द्य शनैः शनैः । 4 ग. तततसो 5-5 क. काथं पंडस्यार्द्धतुलेन्मितं ग. क्वाथ खंडस्यात् तुलार्धकम् 6 क. चूर्णनामानि, ग. चूर्णानां तत्र 7 ग. देयं, शा. ज्ञेया 8 क. चतुपला

+ – +'प्रत्येकञ्च ........... प्रक्षिपेत्', अस्मिन्स्थाने ग्र. ग्रथे
"चातुर्जातं पुनःदेयं पलानां त्रितीयभागकम् ।
मधुना षट्पलं चात्र ह्येकीकृत्य समाहरेत् ॥ इति पाठः
शार्ङ्गधरसंहितायाम्
"प्रत्येकञ्च त्रिशाणं स्यात् त्वगेलापत्रकेशरम् ।
ततस्त्वेकीकृते तस्मिन् क्षिपेत्क्षौद्रं च षट्पलम् ॥" इति पाठः
9-9 क. 'षट्पलमधुना शिपेत्' ।

10-10 क. 'इत्येता नावन प्रोक्त'; ख. रसायनं रसो दिव्यं
11-11 ग. प्रोक्तश्च्यवनसंज्ञकः'; क. 'च्यवनप्राशसंज्ञितं'
12-12 क. खादे क्षीणा; ग. खादेत् क्षीर

×–×"बालवृद्ध ........... ये नराः", अस्मिन्स्थाने क. ग्रन्थे 'बालवृधिक्षणानारी क्षयक्षीणाश्च ये नराः' इति पाठः 13 शा. शोषिणः 14 क. हृद्रोगिण 15-15 ग. ग्रंथे धातुनाक्षीणमाचरेत् ।

❀कासश्वासं पिपासार्तं[1] वातार्शं[2] रजसो[3]ग्रहम्[4] ।❀
×वातं पित्तं श्लेष्मदोषं शुक्रदोषञ्च नाशयेत् ॥६०॥×

मेधां स्मृतिं[5] स्त्रीषु हर्षं[6] कान्तिं[7] वर्णं प्रसन्नताम्[8] ।
अस्य[9] प्रयोगादाप्नोति नरो जीर्णविवर्जितः[10] ॥६१॥

टीका— पाढल टां १०, इन्द्रवारुणी टां १० (अरणी), सिवनी टां १०, बील टां १०, अरलु टां १०, कांटी टां १०, सालिवनी टां १०, पीढवनी टां १०, उभी रींगणी टां १०, बैठी रींगणी टां १०, पीप्पलि टां १०, काकडासीगी टां १०, दाष टां १०, गिलोई टां १०, हरडै टां १०, एरण्डजड़ टां १०, (शोधित पाठानुसार बला), भूमीआमली टां १०, डोडी टां १०, (वासा, ऋद्धि और जीवन्ती), कचूर टां १०, जीवक टां १०, ऋषभक टां १०, मोथ टां, १०, पुहकरमूल टां १०, काकजंघा टां १०, मुद्गपणी टां १०, माषपणी टां १०, बिदारीकंद टां १०, साटी टां १०, काकोली टां १० (व क्षीरकाकोली टां १०) कंवलडोडा टां १०, मेदा टां १० ( और महामेदा टां १०) लहुडी इलायची टां १०. अगर टां १०, सूकडि टां १०, आवला काचा थान ५००, पाणी मण ५ (पांच द्रोणजल), (अष्टमांश शेष रहे तब क्वाथ उतार कर छाने व आंवलों की गुठलियां निकाल कर दृढ हाथ से मर्दन कर वस्त्र से छान लें। फिर घृत सात पल में मंद अग्नि पर सेक लें। फिर उनमें पूर्वोक्त क्वाथ डाल दें व) षांड टां ८०० (अर्द्ध तुला)। (लेह की तरह उसे साध कर निम्नलिखित द्रव्यों के चूर्ण मिलावें) पीपलि टां २०, वशलोचन टां १०, (वंशलोचन ४० टां) (दाल-चीनी, इलायची, तेजपात व नागकेशर-प्रत्येक ३-४ शाण) सहित(मधु) टां ६०, अवलेही री विधि छै सो कीजै। जले थाहर राषीजइ। पाठ थकी विचारि लेज्यौ।

---

1 क. प्रियासार्त्तं, ग. पिपासार्तं ।

2 क. वातसे, ग. वातार्शं 3 क. रिजसो 4 ग. ग्रहः ❀ – '❀ कासं ............... ग्रहम्', पाठोऽयं शा. नोपलभ्यते × – × 'वातं पित्तं ...........नाशयेत्', अस्मिन्स्थाने क. ग्रंथे "वात पित्तं श्लेष्मदोषं ............" इति पाठः, ग. ग्रंथे 'वातपित्तज-शुक्रदोषांश्मरीदोषनाशनम्' इति पाठः; शा. "वातं पित्तं शुक्रदोषं मूत्रदोषं च नाशयेत्" इति पाठः । 5 क. स्मृति 6 क. हर्ष 7-8 क. कांतिवर्णा प्रसनता, ग. कांति वर्णं प्रदाययेत् । 9 9 क. अस्यानुयोगमाप्नोति 10 क. विवर्जित् ।

अथ खण्डखाद्यावलेहः[1]

शतावरी छिन्नरुहा[2] वृषमुण्डितिकाबला[3]: ।
तालमूली च गायत्री [4]त्रिफलायास्त्वचस्तथा[4] ॥६२॥

भार्गी पुष्करमूलञ्च पृथक् पञ्चपलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम्[5] ॥६३॥ ❀

---

पाठान्तरम् यो. र. (चिकित्साकलिकातः) — (च्यवनप्राशः)

'द्विपञ्चमूलीजलसिद्धमाज्यं
वासाघृतं वाप्यथ षट्पलञ्च ।
पेयं हि तच्छागलगव्यतोऽथ
प्रयुज्यते नागबलाभिधानम् ॥
शृङ्गीतामलकीफलत्रिकबलाच्छिन्नाविदारीसटी,
जीवन्तीदशमूलचन्दनघनैर्नीलोत्पलैलावृषैः ।
मृद्वीकाष्टकवर्गपौष्करयुतैः सार्धं पृथक्पालिकै—
रष्टोनानि शतानि पञ्च विपचेद्धात्रीफलानामपः

उद्धृत्याऽऽमलकानि तैलघृतयोः षड्भिश्च षड्भिःपलैः—
भृष्टान्यर्धतुलां निधाय विधिवन्मत्स्यण्डिकायाः पचेत् ।
शीते षण्मधुनः पलानि कुडवो वांश्याश्चतुर्जाततो
मुष्टिर्मागधिकात्पलद्वयमयं प्राश्यः स्मृतश्च्यावनः ॥

न शोषः साफल्यं व्रजति वपुषि क्षीणमनसो,
न मूर्च्छा नो छर्दिस्तदपि च न च श्वासकसनम् ।
न चालक्ष्मीर्विघ्नः क्वचिदपि च न व्यापदभयं,
प्रयोगादेतस्मान् मनसिजधियो बिभ्रति मनः ॥

1 भा. प्र. खण्डखाद्यलोहम्; भै. र., यो. र., र. यो. सा. च खण्डकाद्यलोहम्
2 ग. नि. गुडूची च 3 ग. वृषाबला मुण्डनिका तथा बृ. यो. त. सिंहास्यो मुण्डिकाबला; ग. नि. वृषमुण्डितिकाभयाः 4 क. त्रिफला च त्वचस्तथा ।
5. क. ० भागाविशेषितम्
❀ टि. यो. र., हारीतसंहितायांच क्वाथे 'बृहत्योरधिकः पाठो दृश्यते ।

❀[1]दिव्यौषधिहृतस्याऽपि माक्षिकेण हृतस्य वा ।
पलद्वादशकं[2] देयं[3] रुक्मलोहस्य[4] चूर्णितम् ।।६४।।❀

खण्डतुल्यं घृतं देयं[5] पलं[6] षोडशिकं[7] बुधैः ।
पचेत्ताम्रमये[8] पात्रे गुडपाको मतो यथा ।।६५।।

---

(काकडासिंगी, भुंईग्रांवला, हरड़ बेहडा, ग्रांवला, बला, गिलोय, बिदारीकंद, नरकचूर, जीवन्ती, दशमूल, रक्तचंदन, मोथा, नीलोफर, इलायची, ग्रडूसा, मुनक्का ग्रष्टवर्ग, पुष्करमूल प्रत्येक ४-४ तोला, ४६३ ग्रांवला लेकर पोटली में उन्हें ६४ शराव=५१२ पल ) जल में क्वाथ करें । १/४ शेष रहने पर उतार कर क्वाथ-छाने व ग्रांवलों को टाट से छानें । गुठली शिरा फेंक दें । छने गूदे को ६ पल घी, ६ पल तैल में भूनें । लाली ग्रावे तब पाक विधि के ग्रनुसार ५० पल मिश्री में पूर्वोक्त क्वाथ का पाक कर लेह समान होने पर उतारे । शीतल होने पर ६ पल मधु मिलावें व वंशलोचन ४ पल (१ कुडव) इलायची, दानचीनी, तेजपात, नागकेशर १-१ मुष्टी (प्रस्थ) पीपर २ पल, मिलावें)

पाठान्तरम् वृ. यो. त.

द्राक्षैलाब्धदशाङ्घ्रिजी+वनबला-शृङ्ग्युच्चटायः कणा—
पथ्याकान—(काक?) नसाब्जपुष्करशठीछिन्नाविदारीवृषम् ।
वर्षाभूहिममाम्रकंजलघंटे धात्रीशतैः पञ्चभिः
पक्त्वा+व्यस्थिशिवायुतं ×यमकतो द्विः षट्पले भर्जितम् ।
सश्वेतार्धतुलां पचेन्मधुतुगा-कृष्णा-चतुर्जाततः
षड्-द्वि-ह्येकपलान्वितश्च्यवनकप्राशो—जरामृत्युजित् ।।
कासश्वासखुडज्वरक्षयतमोहृन्मूत्रशुक्रार्तिजित् ।
सक्षौद्रोंऽशशताजमूत्र+शतजः कासे कफश्वासहा ।।
इति च्यवनप्राशविभीतकावलेहो ।

+बृ. यो. त. 'क.' 'जीवकर्षभकौ मेदा-काकोल्यौ द्वौ च योजिते । द्वे शूर्पपर्ण्यौ जीवन्ती मधुकं चेत्ययं गणः ।।'

×बृ. यो. त. क. 'द्वाभ्यां घृततैलाभ्यां यमकः' ।

+बृ. यो. त. क. तुलतः

( श्लोक सं. ६४-६५ ) 1 क. दिव्यो. 2 क. पलं द्वादशके 3 क. जेयं 4 क. रुक्मलोहस्य; वृ. वै. चारुलोहस्य, भै. र. कान्तलोहस्य 5 क. देय 6-7 क. पलै षोडसिकं 8 क. 'पचे न ताम्र पये' ।

❀ टि. यो. र. 'सुवर्ण-लोहयो' पलं पलमित्यधिकः पाठः

प्रस्थार्द्धं मधुनो [1]दद्यात् शुभाश्मजतुकं[1] त्वचम् ।
शृङ्गी बिडङ्गं कृष्णा च शुण्ठ्यजाजी[2] पलं पलम् ॥६६॥

त्रिफला धान्यकं पत्रं द्व्यक्षं[3] मरिचकेशरम् ।
चूर्णं दत्त्वा[4] सुमथितं स्निग्धे भाण्डे निधापयेत् ॥६७॥

यथाकालं प्रयुञ्जीत विडालपदकं[5] ततः ।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं तथा[6] ॥६८॥

गुरुवृष्यान्न[7]-पानानि स्निग्धं मांसादिबृंहणम्[8] ।
रक्तपित्तं प्रदुष्टञ्च[9] क्षयं[10] कासं विशेषतः ॥६९॥

वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम्[11] ।
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरन्तथा ॥७०॥

आनाहं रक्तसस्रावमम्लपित्तं[12] निहन्ति च ।
चक्षुष्यं बृंहणं[13] वृष्यं मङ्गलं प्रीतिवर्द्धनम् ॥७१॥

आरोग्यं पुत्रदं[14] श्रेष्ठं कामाग्नि[15]-बलवर्द्धनम् ।
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्त्तितम् ॥७२॥

---

1-1 भा. प्र. ग. देयं शुभाश्मजतुकस्य च 2 क. शुण्य 3 ग०, भा. प्र० च कणा; ग. नि. त्र्यक्षं 4 क. दद्यात्वा 5 वृ. वै. विडालचरणांशकम् 6 ग०, भा. प्र., र. र०, चक्र., भै. र., बृ. यो. त, वृ. वै०, ग. नि च. 'पयः' 7 क. वृक्षान्न; र. र, चक्र., भै. र. आदिषु 'गुरुवृष्यानुपानानि' 8 र. र. भोजनम्; वृ. वै. नित्यशः 9 भा. प्र., र. र., चक्र. भै. र., बृ. यो त, ग. नि. च 'क्षयंकास' 10 भा. प्र. पार्श्वशूलं, र. र., चक्र., भै. र., बृ. यो. त., ग. नि. च. पक्तिशूलं; वृ. वै. क्षयं कार्श्यं ।

11 ग., र. र., चक्र. च क्रिमीन् 12 क. रक्तस्रावं च अम्लपित्र; ग., र. र., बृ. यो. त., वृ. वै. च रक्तसंस्रावमम्ल ···; भा, प्र., ग. नि. च मूत्रसंस्राव 13 क. बृहगा 14 र. र. पुष्टिदं, 15 क., बृ. यो. त., वृ. वै. ग. नि. च. कायाग्नि ।

छागं पारावतं[1] मांसं[2] तित्तरिः क्रकरःशशः[2] ।
कुरङ्गः[3] कृष्णसारश्च मांसमेषां प्रयोजयेत् ।।७३।।

नारिकेलपयः पानं सुनिषण्णकवास्तुकम् ।
शुष्कमूलकजीवाख्यं[4] पटोलं बृहतीफलम् ।।७४।।

फलं वार्त्ताकिपक्वाम्रं[5] खर्जूरं स्वादुदाडिमम् ।
❀ककारपूर्वकं यच्च मांसं चानूपसम्भवम् ।।७५।। ❀

× वर्जनीयंविशेषेण खण्डखाद्यं प्रकुर्वता ।।७६।। ×

टीका— सितावरी टां ५०, गिलोइ टां ५०, अरडूसौ टां ५०, मुण्डी टां ५०, बला टां ५०. धमासो टां ५०, खयरसार टां ५०, हरडै टां ५०, बहेडा टां ५०, आवला टां ५०. तज टां ५०, भांडगी टां ५०, पुहकर-मूल टां ५०, पाणी टां ४०९६ (१ द्रोण) पाणी इतरा माहे इतरा उषध घालीनै हिंसो आठमौं पाणी रहइ तिवार इ उतारिनइ खांड घृत तांबा रा ठाम मांहे पाती करनइ स्वर्णं आदि दे उषध सुभे लोजै तियां रा नाम सोनउ मारियो ||स्वर्णभस्म टां १२० ? सार मारयउ टां, १२० खांड टां १६०, घृत टां १६०, सहित टां १२० (प्रस्थार्ध) सिलाजीत टां १०, तज टां १०, काकडासींगी टां १०, बिडंग टां १०, पीपलि टां १०,सूंठि टां १०, जीरो टां १०,हरडै टां १०, वहैडा टां १०

---

1 क. पारापति　2-2 क. तितरिक्तकरादयः, वृ. वै. तैत्तिरं कौक्कुटं तथा 3 क. शशा, ग. नि०, वृ. वै., वृ. यो. त. च कुलिङ्ग　4 र. र. बीजाख्यं, चक्र० जीराख्य　5 वृ. यो. त. पक्वान्नं ❀-❀ 'ककार ...... सम्भवम् ।' अस्मिन्स्थाने वृ. वै.

"ककारपूर्वकं यच्च यच्च क्षीणक्षते हितम् ।
शालिषष्टिकनीवारवनमुद्गमसूरकाः ।।
अन्यान्यपि च वस्तूनि शास्त्रोक्तानि हितानि च ।"
इत्यधिकः पाठः

|| मूल पाठ में 'दिव्यौषधियों से मारा गया, अथवा माक्षिक से मारा हुआ रुक्मलोह ही कहा गया है । स्वर्ण है ही नहीं ।

×-× हरड़ै से नागकेशर तक के द्रव्यों का तोल मूल पाठ में 'द्व्यक्षं' है ।

तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
जीवनीयैः सयष्ट्याह्वैः क्षीरं चैव शतावरीम् ।।
छागालाद्यमिदं नाम्ना सर्ववातविकारनुत् ।।
अर्दिते कर्णशूले च बाधिर्ये मूकमिन्मिने ।
जड-गद्गद-पङ्गूनां खञ्जे गृध्रसिकुब्जयोः ।।
अपतानेऽपतन्त्रे च सर्पिरेतत्प्रशस्यते ।।
द्वात्रिंशतपलिकान्यत्र देयानि दशमूलतः ।
घृते तैलेऽच योगे च यद् द्रव्यं पुनरुच्यते ।। ?
सज्ज्ञान व्यवहार्येण भागतो द्विगुणं भवेत् ।। ?

*'चर्मादिहीनं तरुणच्छागमांसं द्वात्रिंशत्पलमानं गृहीत्वा, दशमूलञ्च द्वात्रिंशत्पलमानं जलद्रोणे पक्तव्यमित्याह वृन्दः । चक्रस्त्वाह—त्यक्तशृङ्ग-खुरादिकमिति ग्रहणयोग्यतादर्शनार्थम्, न पुनराकृतिमानग्रहणार्थञ्च, अतः पञ्चाशत्पलानि मांसस्य दशमूलस्य च अत एव वक्षति द्रोण इति । क्षीर-शतावरीरसौ प्रत्येकं स्नेहसमौ ।

'द्रोणे द्रव्यतुलाश्रुत्या स्याच्छागदशमूलयोः ।
पृथक् तुलाऽर्द्धे यष्ट्याह्व-द्वयं देयं द्विधोक्तितः ।।'*

इति छागालाद्ये विशेषः ।

*'यष्ट्याह्वद्वयं देयं द्विधोक्तित' = इति स्थलज-जलज भेदेन यष्टिमधुद्वयं ग्राह्यमित्यर्थः'

वृ. यो. त. त्रिमल्लभट्टस्तु

'शकृद्रसं मांसरसं मूत्रं सौवीरकादिकम् ।
स्नेहतुल्यं दधिक्षीर जलं चैव चतुर्गुणम् ।।'

वृन्दवैद्यके

'द्वात्रिंशच्च पलान्यत्र देयानि दशमूलतः ।
घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते ।।

तज्ज्ञातव्यमिहाऽर्थेन भागतो द्विगुणं भवेत् ।।'

नाराचकं घृतम्

'चित्रकं त्रिफला दन्ती त्रिवृ[1]ता कण्टकारिका ।
स्नुही[2]क्षीरं बिडङ्गानि घृतं दशममुच्यते ।।

एकैकस्य च कर्षेण घृतस्य कुडवं पचेत् ।
चतुर्गुणेन तोयेन स[3]म्यगेतन्मिताग्निना[3] ।।

तस्य काले पिबेन्मात्रां पलार्धसंमितां नरः ।
उष्णोदकानुपानं स्यादल्पत्वादस्य सर्पिषः ।।

विरिक्ते च यवागूः स्यात्सर्पिषा परिवर्जिता ।
रसेन जाङ्गलानां वा भोजयेन्मतिमान् भिषक् ।।

वातगुल्ममुदावर्तं प्लीहार्शो ब्रध्न[4]कुण्डलम् ।
ग्रहणीं दीपयेन्मेहान् कुष्ठदोषांश्च नाशयेत् ।।

नाराचमिति विख्यातं सर्पिर्नाराचसंज्ञितम् ।
(भिषजा)भैषज्यं सम्प्रयोक्तव्यं नाराचमिव शत्रवे ।।'

भावप्रकाशे, चक्रदत्ते, भैषज्यरत्नावल्यां, बृहद्योगतरङ्गिण्यां च पाठान्तरम्—

'स्नुक् क्षीर-दन्तीत्रिफलाविडंग सिंहीत्रिवृच्चित्रककर्षकर्षम् ।
घृतं विपक्वं कुडवप्रमाणं तोयेन तस्याक्षमथार्द्धकर्षम् ।।

पीत्वोष्णमम्भोऽनुपिबेद्विरेके पेयरं रसं वा प्रपिबेद्विधिज्ञः ।
नाराचमेतज्जठरामयानां युक्त्योपयुक्तं प्रवदन्ति सन्तः ।।'

बृहद्योगतरङ्गिण्यामपरो योगः

'त्रिफलां चित्रकं दन्तीं बृहतीं कष्टकारिकाम् ।
स्नुहीसार्कबिडङ्गानि घृतस्य कुडवं पचेत् ।।

---

1 बृ.यो.त. बृहती 2 बृ.यो.त. स्नुतीसार्कं
3-3 ख. साधयेत्तत् सुखाग्निना
4 ग.नि. वर्ध्म

तस्य मृद्वग्निसिद्धस्य कर्षार्धं पाययेन्नरम् ।
शोथगुल्मोदरानाह-प्लीहोदरवृकोदरान् ।।
नाशयत्युल्वणानेतान्सर्पिर्नाराचसंज्ञितम् ।।'

ख. पुस्तके महाबिन्दुघृतम्

'त्रिवृत्पलं स्नुक्पयस[1]: पलञ्च
कम्पिल्लकस्यापि पलं तृतीयम् ।
चतु[2]ष्पलं चामलकीरसस्य[2]
पलार्द्धमन्यल्लवणः प्र[3]कुर्यात् ।।

प्रस्थार्धमे[4]भिर्हविषो विपक्वं
जले महाबिन्दुघृ[5]तं प्रसिद्ध[6]म् ।
निहन्ति गुल्मं[7] जठरा[8]णि चैव
प्लीहा[9]मयानाशु विरे[10]कयोगात् ।।

शतधौतघृतम्

जलेन शतधौतं च गोघृतं चातिशीतलम् ।
दाहं नाशयते[1] क्षिप्रं तथा व्रण[2]रुजापहम् ।।

इति श्रीपरमहंस-परिव्राजकाचार्य-आनन्दभारती विरचितायां आनन्द-मालायां घृताधिकारः ।।

इति श्रीयोगशास्त्रे योगज्ञाने आनन्दसिधि ? कृतं (कृतं) घृताधिकारः

[इति सप्तमोऽधिकारः]

---

1 पयसा 2-2 ख. चतुपलं आमलकी रसरी 3 च. क. लवणस्य चैव
4 ख. प्रस्थार्धमोभि = हविषे 5 ख. घृत 6 ख. प्रसिद्धम्
7 ख. गुल्मां 8 ख. जठराणाय 9 ख. प्लीहानिमप्याशु
10 ख. विचेच 11 ख. नाशयति 12 ख. प्राण ? रुजामति ?

# अथ अष्टमोऽधिकारः

## अथ वृद्ध[1]नारायणतैलम्

दशमूल[2]मरिष्टौ द्वौ चतुःपर्णी फलत्रयम् ।
खदिरं बीजसारञ्च गोकर्णी हयमारकः ।। 1 ।।

वाजिगन्धा वरा रास्ना वर्द्धमानचतुर्बला ।
चतुः प्रसारिणी (?) नाम्ना चतुः[3]क्रान्तार्कमार्कवम् ।। 2 ।।

शोभा[4]ञ्जनं वज्रनाम्ना चतुः[5]कन्दसमन्वितम् ।
ना[6]गार्जुन्यथ मत्स्या[7]क्षी दन्ती तौ (द्वौ ?) द्वौ च सारिवा ।। 3 ।।

त्रिवृता वृद्ध[8]दारु च चन्द्रहासा विष[9] (?) विषा (?) द्विधा ।
चतुर्दुम्बर (?) बदरी द्वौ वृष[10]वासी (?) तथैव च ।। 4 ।।

पुनर्नवेन्द्रवा[11]रुण्यौ रौहिषं देवदालिका ।
एतान्सर्वान् समाहृ[12]त्य प्रस्थ[13]मात्रं पृथक् पृथक् ।। 5 ।।

संक्षु[14]ण्य पाचयेत्तोये चा[15]ष्टभागावशेषितम् ।
वस्त्रपूतञ्च तत्क[16]वाथं कारयेत्कु[17]शलो भिषक् ।। 6 ।।

---

1 क. वृघनारायणतेलः 2 क. दशमूल अरिष्टौ ग. दशमूलारिष्टौ
3 ग. चतुर्क्रतार्कमर्कवम् (?)
4 क. सोमाजनं 5 ग. चतुष्कन्दसमानितं 6 क. नागार्ज्जनीति
7 क. मत्साक्षी
8 क. ० दारुश्च, ग. वृद्धयनुश्च (? 9 ग. विषद्विषा 10 क. वृषवासीस्तथैव, ग. वृषावासी तथैव
11 क. ० वारुण्या 12 क. हृत्यं 13 क. प्रस्थं मात्रा
14 क. सक्षुण पचये, ग. संक्षेन. 15 क. दष्टमागावसेषितं
16 क. तत्कार्यं 17. कुसलो

रस[1]तुल्यं क्षिपे[2]त्तैलं तैलतुल्यं शतावरी।
अ[3]जाक्षीरं प्रदातव्यं चतु[4]र्गुणं तथैव च ।। 7 ।।

पाच[5]येत्तु क्रमा[6]ग्नौ तान् वस्त्रपूताञ्च कारयेत्।
शतपुष्पा च दार्वी[7] च त्रि[8]कटु त्रि[9]फला तथा ।। 8 ।।

चव्यचित्र[10]कमूले च पुष्करं[11] पौष्कराह्वयम्।
क[12]ट्फला-गजपिप्पल्यौ शृङ्गी-धान्यक-जीरकम् ।। 9 ।।

हपुषा वा[13]कुचीवीजं त्रायमाणं पुनर्नवा।
गुडूची चक्रमर्दश्च रामसेनो यवानिका ।। 10 ।।

जीवनीय[14]गणद्रव्यमष्टवर्गसमन्वि[15]तम्।
चन्दनागुरुका[16]श्मीर-जातीफलदलानि च ।। 11 ।।

एला लवङ्ग-कङ्कोल-त्वक्पत्रं नखकेशरम्।
मलया[17]गिरिह्रीविरं तगरं कुष्ठ[18]मेव च ।। 12 ।।

एकाङ्गी (?) शाटि-तालीशं कृष्णकोकिलयाऽन्वितम्।
रक्तचन्दन-धत्तूर-पद्मकं देवदारु च ।। 13 ।।

शैलेय[19]कञ्च श्रीवासं सिल्ह[20]कश्चाम्बरस्तथा।
एतानि समभागानि पल[21]द्वादशसङ्ख्यथा ।। 14 ।।

---

1 ग: क्वाथतुल्यं 2 क. क्षिपेतैलं 3 क. मज्जाक्षीर 4 क. चातुर्गुणितस्तथैव ग. तैलस्याच्चतुर्गुणं
5 क. ग. पाचयेत् 6 क. क्रमाग्नीनां 7 क. दार्वीणां 8 क. त्रिकटु;
9 क. त्रिफलाः
10 क. चित्रकमूढानां (?) 11 क. पुष्कर 12 क. कटूफलं गजपिप्पल्या
13 क. वकुची
14 क. 0 गणैः 15 क. समन्नितैः, ग. समानितैः 16 क. काश्मीरः
17 क. मलयागरह्लीवेरं 18 क. कुष्ट एव
19 क. शैलेयं श्रीवासं च (छन्दोभङ्ग) 20 सिल्हकं अम्बरः 21 क. पलं द्वादशसंक्षया

मञ्जिष्ठा च तुलामानं कल्कीकृत्य विनिक्षि[1]पेत् ।
कल्का[2]च्चतुर्गुणं तैलं तैला[3]त्तोयं चतुर्गुणम् ।। 15 ।।

शनैः[4] मृद्वग्निना पक्वं[5] यदा[6]वर्त्तिः प्रजायते ।
किञ्चिन्नीलारु[7]णाभासं तैलं नारा[8]यणं विदुः[8] ।। 16 ।।

पाने[9] बस्तौ तथाऽभ्यङ्गे भोज्ये नस्ये प्रतापयेत् ।
अधो[10]भागे च ये वाताः[11] शिरो[12]मध्यगताश्च ये ।। 17 ।।

मन्यास्तम्भे हनुस्तम्भे दन्तरोगे गलग्रहे ।
यस्य शुष्य[13]ति चैकाङ्गं गतिर्यस्य विहन्यते ।। 18 ।।

क्षीणे[14]न्द्रिया नष्टशुक्रा ज्वरक्षीणा[15]श्च ये नराः ।
वधिरा ल[16]ल्जिह्वाश्च मन्द[17]धीकाः सदालसाः[17] ।। 19 ।।

अल्पप्रजा[18] च या नारी या[19]च गर्भं[19] न विन्दति ।
वा[20]तार्त्तौ वृषणौ ये[21]षामन्त्रवृद्धिश्च दारुणा ।। 20 ।।

तत[22]त्तैलवरं तेषां नाम्ना नारायणं[23] स्मृतम्[23] ।। 21 ।।

टीका :—पाडल, टींटू, सिवणो, शालवनी, पीठवनी, बील, अरणी, दोनू रींगणी (दशमूल की दशवीं औषधि गोक्षुरु है) (दशमूल के पश्चात् व विजयसार के पहले मूल पाठ में दोनों नीम, चतुः पर्णी, फलत्रय,

---

1 क. विलिक्षिपेत् 2 क. करका चतुर्गुणं 3 क. तैलातोयं
4 क. सनैंमृ. 5 क. पक्कं 6 ग. 0 र्घ्रति 7 क. 0 रूणा 8-8 क. नारायणादिह
9 क. वस्थौस्तथा 10 क. अघोभागेन 11 क. वाता 12 क. सिरोमध्यगजदाश्च
13 क. दुष्यति
14 क. क्षीणैन्द्रिया 15 क. क्षीणा च 16 क. लालजिह्वा 17-17 क. मन्दमेदोलसाश्च ये
18 क. प्रजाश्च 19-19 क. यावद्गर्भं 20 क. वातातौ
21 क. येवामंत्रवृधिश्च
22 क. एतैतैलवरं 23-23 क. नारायणस्मृताः

व खदिर भी हैं। (ये टीका में नहीं हैं), वीजैसार, (इसके पश्चात् मूल पाठ में गोकर्णी है) कणयर री जड़, आसगंधि, पाठवल (?) (कंघी ?) गांगवणि, सहदेवी, खरहटी, (मूल पाठ में असगंध व वर्द्धमान चतुर्बला के बीच में 2 द्रव्य वरा व रास्ना और हैं। मूलपाठ में बलाएं वर्धमान कही गई हैं किंतु टीका में वे समभाग ली गई हैं), प्रसारणी (मूल में चतुः प्रसारिणी पाठ है ? टीका में केवल 1 ही प्रसारिणी कही गई है) (इसके आगे मूल पाठ में 'चतुः क्रान्तार्कमार्कवम्' है। इन द्रव्यों का टीका में कोई उल्लेख नहीं है), सोरीजणउ थोहरिदूध, खीरकन्द, केलिकंद, बिदारीकंद, मुसलीकंद, दूधेली, दांतणि, सारिवा, कृष्णसारिवा, निसोति, बधायरौ, बावची (?) (मूल में 'चन्द्रहासा' है) (इसके पश्चात् 'विषद्विधा' पाठ है, टीका मे ये दोनों द्रव्य भी नहीं कहे गये हैं), धोली ऊंबर, काली ऊंबरि (मूल पाठ 'चतुर्दुम्बर' है), वड बोर, लघुबोर, साठी, तुंबरी, रोहीसरूंख, (लघुबोर व साठी के बीच में मूलपाठ में 'वृषावासी' है।), देवदालि, प्रत्येक प्रत्येक टां. 256 कीजै। गाढा कूटि नइ पाणी टां 17664 मांहि घाति आगि उपरि चढाईजै, अवटाईजैं, आठमौं हिसो आय रहै तिवारइ उतारिजै, छाणि लीजै। तेलि टां 2208, सतावरी रो रस टां 2208, छाली रो दूध टां 8832। पछई अनुक्रम अनुक्रम अग्नि दीजै। पछै छांणि तेल करि लीजै। पछइ वीजा ही उसा कहै छइ सो—सोवा, दारुहलद, सूंठि, मिरच, पिप्पलि (मूल पाठ में त्रिकटु के आगे त्रिफला भी है।), चाविक, चित्रक, पीपलामूल, पोहकरमूल, (मूल पाठ में 'पुष्करं पौष्कराह्वयं' है) कायफल, गजपीपलिका, ककडासिंगी, धाणा, जीरौ, हींह, बाबची, त्राहिमाण, साटी, गिलोइ, पंवाड, किरायतौ, अजवाइणि, जीवक, ऋषभक, मेद, (।), महामेद, (दा), काकोली, खीरकाकोली, ऋद्धि, वृद्धि, डोडी, जेठीमधु, माषपर्णी, मुगदपर्णी[1]

---

1 मूल पाठ में "जीवनीयगणद्रव्यैरष्टवर्गसमन्वितैः" कहा गया है।

सूकडि, अगर, केसरि, जायफल, जावंत्री, इलायची, लवङ्ग, कंकोल, तज, पत्रज, नख, नागकेशरि, मलयागिरि, वालो, नेत्रवालौ, तगर, कूठ, (कूठ के पश्चात् मूल पाठ में एकाङ्गी है) सठी, तालीसपत्र, ('तालीसं' के बाद मूलपाठ में "कृष्णकोकिलयान्वितम्" पाठ है) रतांजणी, पदमाख, देवदुवार, कंटासेलो(?) सेलारस ('शैलेय-कञ्च श्रीवासं' का अर्थ टीका में 'कंटासेलो व सेलारस किया गया है) (इन द्रव्यों के पश्चात् मूल पाठ में 'सिल्हकमम्बरस्तथा' ये दो द्रव्य और हैं) प्रत्येक प्रत्येक टां 192, मंजीठ टां 1600, इतरा उसा वांटि कूटि बराबर सा कीजै, राति पाणी टां 99840 माहि भीजवीजइ । पछइ जु तेल पहिलौ कीयौ छई तिण मांही इयां उसा महा (?) कल्का काढि(?) छाणि घातीजई। भीजवीयां पछइ जि तरउ काल्कनीसरै तिणहूती चउगुणो तेल घातीजई । तिण तेलि हुंति चउगुणौ पाणी भेलीजै। सनइ सनइ (शनैः शनैः) वासदे (अग्नि) वालिजै (जलाकर)। मांहि जिके उषध भेलिया छइ तीयारी वाटि (वर्त्ति) हुवइ अरु नीली राती छाया हुवै । पाणी सूसे (जल सोंखले तब) तेल हुवौ जाणीजै। तिवारइ उतार लीजै । पाठ मांहि विधि कही छैइ तिम लीजइ । गुण ही पाठ माहि छै ।

## विष[1]गर्भतैलम्

कनकस्य तु नि[2]र्गुण्डी तुम्बिनी सपुनर्नवा ।
वातऽरिश्चा[3]श्वगन्धा च प्रपु[4]न्नाटं सचित्रकम् ।। 22 ।।

सौभाञ्जनं काकमाची कलिहा[5]री च निम्बक[6]म् ।
महानिम्बेश्वरी चैव दश[7]मूलं शतावरी ।। 23 ।।

---

1 यो. र. महाविषगर्भतैलमिति नाम

2 क. तु निर्गुंडी 3 क. वातारिश्चगंवाश्च ख. सुगंधा 4 क. प्रपुन्नाट

5 यो. र. कलिकारी 6 ग. नुविकम् (?) 7 क. दशमूली

कोरवल्ली सारिवा च श्री[1]पर्णी च विदारि[2]का ।
[3]वज्राकौं मेषशृङ्गी च कारवीरद्वयन्तथा[4] ।। 24 ।।

*काकजङ्घा त्वपा[5]मार्गस्तथा स्यात् सम्प्रसारिणी ।*
°त्रिफला तत्समासेन (?) [तत्समाशेन] रसतैलसमानि (?) च।।25।।+

कृष्णस्य तिलतैलेन (?) [कृष्णाख्यतिलतैलञ्च] तैलमेरण्डसार्षपम् ।
पचेदेकत्र सर्वस्य (?) [सर्वं हि] तैलं सिद्धं च बुद्धिमान् ।। 26 ।।°

त्रिक[6]टुश्वाश्व (चाश्व[7]? ) [त्रिकटुं चाश्व] गन्धां च राला[8] (?)
[रास्नां] कुष्ठं घनं[9] वचाम्[9] ।
देवदारु कलि[10]ङ्गञ्च द्वौ क्षारौ लवणानि च ।। 27 ।।

तुत्थकं कट्फलं पाठां भार्गीं च नवसादरम् ।
°गन्धकं पुष्करमूलं सिलालक (?) (शिला ताल? ) सठीन्तथा ।।28।।°

---

क. काखवल्ली ख. काकवली 1 यो. र. श्रावणी (श्रीपर्णिका = कट्फलं किन्तु श्रावणी = मुण्डी) 2 विदारिका = विदारिगन्धा (शालपर्णी), विदारी = विदारीकन्दः ।

3 क. वज्राक्कं 4 यो. र. वचा

*–* यो. र. 'काकजंघा··· ···सम्प्रसारिणी' अस्मिन् स्थाने यो. र. "काकजङ्घा त्वपामार्गो बला चातिबला द्वयम् । व्याघ्री महाबला वास सोमवल्ली प्रसारिणी ।" इति पाठः 5 क त्वयामार्गः °–° त्रिफलां तत्समासेन·······तैलसिधं च बुद्धिमान्' अस्मिन्स्थाने यो. र. "पलोन्मितानि चैतानि द्रोणेऽम्भसि विनिक्षपेत् । पचेत् पादावशेषेऽस्मिन् कल्कस्य कुडवं क्षिपेत् ।" इति पाठः ख. करसूस्य ?

°–+ 'त्रिफला तत्समासेन·······समानिच'

[त्रिफलामेषां रमो ग्राह्यस्तद्वत्तैलानि मिश्रयेत् ।]

6 यो. र. त्रिकटुं 7 यो. र. विषतिन्दुञ्च 8 यो. र. रास्ना 9-9 यो.र. विषं घनम् 10 देवदारु वत्सनाभो

°–° 'गन्धकं·······सटी तथा', अस्मिन्स्थाने यो. र. "त्रायन्ती धन्वयासं च जीरकं चेन्द्रवारुणी" । इति पाठः ।

×एतानि कर्षमात्राणि सममात्राणि कारयेत् ।
प्रस्थ[1]तं च [प्रस्थं तत्र] विषं दद्यात् [दत्वा] सूक्ष्मचूर्णीकृतं क्षिपेत् ।। 29 ।।×

विषगर्भमिदं नाम सर्ववा[2]तान् व्यपोहति ।
*कु[3]ष्ये(?) भूपृष्ट [कुक्षि-भ्रू-पृष्ट] शंखेषु संधीनां(?) [सन्धिषु] शाथमेव च ।। 30 ।।*

+गृध्रसीं च शिरोवातं सर्वाङ्गस्फुटनं ? [स्फोटनं] तथा ।+
दण्डापतान[4]कीष्ठीला [दण्डापतानकाऽष्ठीलाः?] कर्णनादं सशून्यताम् ।। 31 ।।

√कम्पनं चार्द्धवातं च बाधिर्यं पलितं तथा ।
गण्डमालाऽपची ग्रन्थी शिरः कम्पापतन्त्रकम् ।। 32 ।।

अनेन सर्ववातानि [०वाताश्च] सन्निपातास्त्रयोदश ।
वनमभ्यागते सिंहे पलायन्ते यथा मृगाः ।। 33 ।।√

"वनमध्ये यथा सिंहात् पलायन्ते महामृगाः ।
तथाऽश्वगजभग्नानां नराणां च चतुष्पदाम् ।।
नाशयेन्नात्र सन्देहो विषगर्भस्य लेपनात्" इति पाठः ।।

टीका :—धतूराबीज, कडवी तूंगी (इन दोनों के बीच में मूलपाठ में निर्गुण्डी

---

×—× 'एतानि ......क्षिपेत्', अस्मिन् स्थाने यो. र. "तैल-प्रस्थं समादाय पाचयेन्मृदुवह्निना" इति पाठः 1 ग. प्रस्थार्द्धं
2 यो. र. सर्वान् वातान् । 3 ग. कुक्षि *—* 'कुष्य.......शोथमेव च', अस्मिन्स्थाने यो. र. "वक्षोरुकटिजङ्घानां सन्धानं श्रेष्ठमेव च ।
+—+ अस्मिन्स्थाने यो. र. "गृध्रसीं च महावातान् सर्वाङ्गग्रहणन्तथा" इति पाठः 4 यो. र. दण्डापतानकं चैव
√—√ कम्पनं चार्द्धवातं.......यथा मृगाः" पाठोऽयं यो. र. नोपलभ्यते;

है।), साटी, एरण्ड री जम (जड़), ग्रासगंधि, पंवाड, चित्रक, सोहीजणो, कइवाइ (काकमाची), राठागारी (कलिहारी), नीब, बकाइणि, पाढल, टीटू, सालवनी, पीठ बनी, सिवनी, दोनूं रींगणी, कांटी, ग्ररणी, बील, शतावरी, करेली, सारिवा, कायफल, विदारीकंद, थोहरि दूध, ग्राकरो दूध, मीढासींगी, राता कणयर री जड़, धवला कणयर री जड, चिरमढी (?) (मूल पाठ में काकजंघा है; रक्त गुञ्जा के पर्यायों में काकचिञ्ची, काकणन्ती, काकादानी, काकपीलू व काकवल्लरी ग्रादि हैं—काकजंघा के पर्याय हैं—काक-जंघा, नदीकान्ता, काकतिक्ता, काका ग्रादि।) ग्राझा झाडौ (ग्रांधीझाडो), प्रसारिणी, हरड, वेहडा, ग्रांवला, उसा सगलां ही रो रस टां 30-30 लीजई (इन सभी ग्रौषधियों का स्वरस प्राप्त कर लेना साधारण बात नहीं है)। कालतिलां रो तेल, एरण्ड रो तैल, सरसव रो तेल। एवं तेल उसां रा रस री बराबर घातीजे। पछै रस नै तैल वरावरि करि (?) भेला करि पचाईजे। तैल सिध हुग्रां पछै उसा—सुंठि, मिरचि, पोपरि, ग्रासगंधि, राठ, (मूल पाठ में राला है, योग रत्नाकर के पाठ में 'रास्ना' है), कूठ, मोथ, वच, देवदुवार, इन्द्रजव, जवखार, (मूलपाठ में 'द्वौ क्षारौ' है), सीधो, सउचल, बिड लूंण, समुद्र लूंण, (कच नमक), थूथो, कायफल, पाठ, भाडंगी, नवसादर, गन्धक, पुहकरमूल, मयणसिल, हरताल, कचूर प्रत्येक टां 4 चार, करि वछनाग टां 256, इतरा उसाजु पछै इ छै इसू बांटि कपडिछाणि करि नइ पहिलो तेल उसधां सहित पचाइ सुध कीयौ छै सु छाणि नइ तिण मांहे पछला उसा भेलि रूडै ठांव घाति राखीजै। पछइ वात व्याध मांहि पाठ मांहि कही छइ सु सहि जाइ। सनिपात 13 जाइ। हुलवै हुलवै सरीर चोप-डीजै।

मारिचा[1]दितैलम्

मरिचं हरितालञ्च त्रि[2]वृतं रक्तचन्दनम् ।
मुस्तं मनः शिला मांसी द्वे निशे देवदारु च ।। 34 ।।

विशाला कर[3]वीरञ्च कु[4]ष्ठमर्कपयस्तथा ।
[5]तथैव गोमयरसं कुर्यात्कर्षमितान् पृथ[5]क् ।। 35 ।।

विषं चार्द्धपलं देयं प्रस्थं कटुकतैलकम् ।
गोमूत्रं द्विगुणं दद्याज्जलं च द्वि[6]गुणं भवेत् ।। 36 ।।

मरिचा[7]द्यमिदं तैलं सिद्धं[8] कुष्ठव्रणापहम् ।
जयेच्चि[○]त्राणि सर्वाणि पुण्ड[9]रीकं विचर्चिकाम् ।। 37 ।।

पा[10]मांश्चित्राणि र[10]क्तं च[11] कण्डूं कच्छूं प्रणाशयेत्[11] ।। 38 ।।

टीका :—मरिच, हरिताल, निसोत, रतांजणी, मोथ, मैणसिल, छड, हलद, दारुहलद, देवदुवार, बुई री जड़ (मूल पाठ में 'विशाला' है), कणियर, कूठ, आक रो दूध, गाय रा गोबरि रो रस, प्रत्येक टां 4 वछनाग टां 8, कडवो तेल टां 256, गोमूत्र टां 512, पाणी टा. 1024 । तेल री बिधि प्रसिध छइ । गुण पाठ माहे छै । चोपडन कीजइ ।

---

1 क. मिरचादितैलः; मा. प्र. लघुमरिचादितैलम्

2 क. तृवृत्ता

3 क. कक्षीरं 4 क. कृष्णमर्क 5-5 ग. 'गोमय रसं च तथा योज्यं कुर्यात् कर्षमितं पृथक्' ? 6 क. द्विगुलं, ग. '०दत्वा पयस्त्रिगुणं क्षिपेत् ।।'

7 क. मरिचादिमिदं 8 क सिधं 9 क. पुंडरंक ○ शा. कुष्ठानि

10-10 क. पामादि निरकसं; ग. पामां सिध्मानि राकाशं ?

11-11 क. दद्रुकंडू विनासयेत् ?; ग. दद्रुकच्छविषापहम् ।

'मरिचाद्यं तैलम्

मरिचालशिलाऽब्दार्क-पयोऽश्चारिजटात्रिवृत् ।
शकृद्रसविशालारुङ्-निशायुग्दारुचन्दनैः ॥
कटुतैलात् पचेत् प्रस्थं द्वयाक्षैर्विषपलान्वितैः ।
सगोमूत्रं तदभ्यङ्गात् दद्रु-चित्रविनाशनम् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत्प्रशस्यते ॥'

गदनिग्रहे पाठान्तरम्

'मरीचदारुभद्रश्री-द्विहरिद्रात्रिवृद्घनैः ।
पलिकैर्मूत्रपिष्टैस्तु विषस्यार्धपलेन च॥
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ।
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ।
पानाद्यैः शीलितं कुष्ठ-दुष्टनाडीव्रणापचीः ॥'

भावप्रकाशे 'मरिचं त्रिवृता मुस्तं हरितालं मनः शिला ।
देवदारु हरिद्रे द्वे मांसी कुष्ठं सचन्दनम् ॥
विशाला करवीरञ्च क्षीरमर्कसमुद्भवम् ।
गोमयस्य रसं कुर्यात् प्रत्येकं कर्षसम्भितम् ॥
विषस्यार्द्धपलं देयं तैलं प्रस्थमितं कटु ।
पचेच्चतुर्गुणे नीरे गोमूत्रे द्विगुणे तथा ॥
मरिचाद्यमिदं तैलं........ ...........'

अथ गुञ्जातै[1]लम्

गुञ्जामूलफलै[2]स्तैलं तोयं द्विगु[3]णितं पचेत् ।
नस्याभ्यङ्गेन शम[4]येत्गण्डमालां सुदारुणाम् ॥ 39 ॥

---

1 क. अथ गुंजाफलमूलै तैलंः
2 क. फलै तैलं 3 क. द्विगुणेतं, ग, तोयद्वयगुणित पजेत् 4 क. समयेद्

टीका :—चिरमढी री जड़ अरु फूल (फल) बराबरि भेला कीजै । ईयां हुंती विमण्ड तेलि, तेल हुंति विमणौ पाणी पचाई तेलि कीजई । गंड-माला जाइ । चोपडण गांठि चोपडीजइ ।।

अथ सिन्दूरादितैलम्

सिन्दू[1]रार्द्ध पलं पिष्ट्वा जीरकस्य पल[2]न्तथा ।
कटुतै[3]लं पचेद् द्वाभ्यां सद्यः पामाहरं परम् ।। 40 ।।

वृद्धवैद्योपदेशेन पाच्यं तैलं पलाष्टकम् ।*

टीका :—सिन्दूर टां 8, जीरो टां 16, कडवो तेलि टां 128 में पचाइ तेलि कीजइ । पांव जाइ ।।

अथ नीलिकाद्यं तैलम्

नीलिका केतकीक[4]न्दं भृङ्गरा[5]जः कुरण्टकः ।
तथाऽर्जुनस्य पुष्पा[6]णि [7]बीजकं कुङ्कुमन्तथा[7] ।। 41 ।।

*कृष्णास्ति[8]लाश्च तगरं स[9]मूलं तगरन्तथा[9] ।*
अयोरजः प्रियङ्गुश्च दाडिमत्वग्गुडूचिका ।।

त्रिफला प[10]द्मकं कु[10]ष्ठं कल्कैरेभिः पृथक् पृथक् ।
क[11]र्षमानैः पचेत्तैलं त्रिफलाक्वाथसंयुतम् ।। 43 ।।

---

1 क. सिदूरार्धपला ख. फलं 5 क. पल तथा 3 क. कटुतैलपचै
* ग. नि. यो. र. मा. प्र. च 'जीरकस्य पलं पिष्टं सिन्दूरार्धपलन्तथा कटुतैलं पचेदेभिः सद्यः पामाहरं परम् । इति पाठान्तरम् ।
4 क. कन्द 5 क. भृङ्गराजकुरण्टजम् 6 क. पुष्फानि 7-7 ख. बीजकुंकुमकं; शा. बीजकात्कुसुमान्यपि (बीजकः सुमनाऽपि च)
8 क. कृष्णतिलश्चतेवारं 9-9 क. तन मूलं तगरं तथा; ख. पुस्तके पाठोऽयं *—* [कृष्णाऽस्तिलाः सितं वाजं तन्मूलन्तगरन्तथा ।] नोपलभ्यते ।; शा. 'समूलं कमलं तथा' इति पाठः तदेव समीचीनः ।*—*
10-10 शा. पद्मपङ्कश्च; क., ० कल्कोरेभिः 11. क-ख. कर्षमानं = ; शा.०मात्रैः

भृङ्गारा[1]जरसेनैव सिद्धं केश[1]स्थिरीकृतम् ।
अकाल[2]पलितं हन्ति दारुणं चोपजिह्वकम् ।। 44 ।।

'नीलीदलं भृङ्गरजोऽर्जुनत्वक्
पिण्डीतकं कृष्णमयो रजश्च ।
बीजोद्भवं साहचरं च पुष्पं
पथ्याक्षधात्रीसहितं विचूर्ण्य ।।

एकीकृतं सर्वमिदं प्रमाय पङ्केन तुल्यं, नलिनी भवेन ।
संयोज्य पक्षं कलशे निधाय लौहे घटे स[3]द्मनि सापिधाने ।।

अनेन तैलं विपचेद्विमिश्रं रसेन भृङ्ग-त्रिफला भवेन ।
आसन्नपाके च परीक्षणार्थं प[4]त्रं बलाकाभवमाक्षिपेच्च ।।

भवेद्यदा तद् भ्रमराङ्गनीलं तदा विपक्वं विनिधाय पात्रे ।
कृष्णायसे मासमवस्थितं तदभ्यङ्गयोगात् पलितानि हन्यात् ।।'

टीका :—(नलिनी के पत्ते, केतकीकंद, भांगरा के पत्ते, कटसरैय [पिया-बांसा] अर्जुनपुष्प, बिजथसार के फूल, केशर ? या विजय-सार के पुष्पों की केशर, काले तिल,तगर, जड़सहित कमलपुष्प, लोह का बुरादा या भस्म, फूल प्रियङ्गु, अनार का छिलका, गिलोय, हरड, बेहडा, आंवला, पद्मकाष्ट, कुष्ठ, प्रत्येक 1-1 कर्ष लेकर कल्क बनावें । तिल तैल 1 प्रस्थ, त्रिफलाक्वाथ 4 प्रस्थ, भृङ्गराजस्वरस 4 प्रस्थ; इन समस्त द्रव्यों को मिलाकर तैलपाक विधि से तैल सिद्ध करलें । यह तैल बालों के झड़ने को रोकता है व केशों को

---

1-1 क. ख. भृङ्गराजरसै पश्चात् सिधं केस 2 क. अकालि टि. ग. पुस्तके योगोऽयं नोपलभ्यते ।

3 ग. नि. पद्मनि 4 ग. नि. पक्षं

स्थिर करता है। समय से पहले या अल्पायु में ही बालों के सफेद होने को रोकता है। उपजिह्विका—अर्थात् जिह्वा के नीचे वाली रसौली या शोथ को नष्ट करता है।)

षड्बि[1]न्दुतैलम्

एरण्डमूलं तगरं शताह्वा जीवन्ति रास्ना सहसैन्धवञ्च ।
भृङ्गं वि[2]डंगं मधुयष्टिका च विश्वौषधं कृष्णतिलस्य तैलम् ।। 45 ।।

आ[3]जं पयस्तैलवि[4]मिश्रितञ्च चतुर्गुणे[5] भृङ्गरसे[6] विपक्वम् ।
षड्बिन्दवो[7] नासिकया: प्रयोज्या:[8]
शीघ्रं निह[9]न्यु: शिरसो विका[10]रान् ।। 46 ।।

च्युतांश्च[11]केशांश्चलितांश्च दन्तान्
सु[12]दीर्घमूलांश्च दृढीकरोति ।
सुपर्णदृष्टिप्रतिमञ्च[13] कुर्यात् [दृष्टी: सुपर्णप्रतिमाश्च ?....]
द्वात्रिंशकान्तिप्रतिमां ददाति[13] ।।

टीका :—स्वेत एरण्ड री जड़, तगर, सोवा, डोडी, राठ, सीधव, तज, गोरीसर ? (क. व ख. के पाठ में 'गुडुत्वं' व ख. के पाठ में 'गरुत्वं' है) (मधुयष्टी व सोंठ भी इसके आगे मूल पाठ में है)।

छाली रउ दूध (8 सेर) दूध हुंति भांगरा रो रस चउगुणौ। उषध हुंति आठगुणौ पाणी (?) मांहि उषध पचाइजै। चतुर्थांश पाणी लेइ नइ तेलि भंगुरउ दूध मांहि सहि भेला करि झमाग्नि देइनै तेलि

---

1 क. षट्बिंदु 2 क. ग. गुडुत्वं; ख. गरुत्वं
3 क. आजा 4 क. ० व मिश्रितं 5 क. ० गुणं 6 क. ० रसं 7 क. बिन्दवे
8 क. प्रयोज्या 9 क. निहन्या 10 क. विकारा
11 क. केशां चलितां 12 भै. र. दुर्बद्ध 13-13 चक्र., वृ. यो. त. वृ. वै. यो. रत्नाकरादिषु "चक्षुर्द्विजोबलञ्चाभ्यधिकं ददाति"

सुधि करि लीजै । बिंद 6 नासिका द्वारि दीजै ।°

इति श्रीपरमहंस-परिव्राजकाचार्य श्रीनृसिंहभारती, तत् शिष्य
परमहंसपरिव्राजकाचार्य-श्रीग्रानन्दभारतीविरचितायां
ग्रानन्दमालायां तैलाधिकारः समाप्तः

ख. पुस्तके ग्रतिरिक्तयोगाः

वृहन् माष[1]तैलम्

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसरसे पृथक् ।।

प्रस्थे तैलस्य वै प्रस्थं क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नाऽऽत्मगुप्तासिन्धूत्थ-शताह्वै रण्डमुस्तकैः ।।

जीवनीयैर्बलाव्योषैः पचेदक्षसमैर्भिषक् ।
हस्तकम्पे शिरः कम्पे बाहुकम्पेऽवबाहुके ।।

बाधिर्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्यार्मदिते कौब्ज्ये गृध्रस्यामपनातके ।।

वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ।
माषतैलमिदं श्रेष्ठमूर्ध्द्वजत्रुगदापहम् ।।

टीका :—उड़द कौ क्वाथ टां 256, बलाक्वाथ टां 256, सुरही कौ क्वाथ टां 256, दशमूल कौ क्वाथ टां 256, जव कौ क्वाथ टां 256, बेर कौ क्वाथ टां 256, कुलत्थ को क्वाथ टां 256, छैली के मांस को रस टां 256, तिल को तैल टां 256, गोक्षीर टां 1024, सुरही, कौंछि, सींधौ, सौंफ, एरण्ड, मोथ, जीवनीयगण की ग्रौषधियां, बला,

---

टि. ° पाकार्थ ग्रौषधियों का कल्क ½ सेर, तैल 2 सेर, भृङ्गराजरस 8 सेर, बकरी का दूध 8 सेर लिया जाता है । कुछ वैद्य बकरी का दूध 2 सेर ही लेते है ।

1 भै. र., चक्र. च 'सप्तप्रस्थमहामाषतैलम्' इति नाम; र. र., यो. र. च 'माषतैलम्' इति नाम; यो. त. वृ. वै. 'वृहन्माषतैलम इति नाम टि. योगोऽयं ग. पुस्तके म. प्र च एवमेव ।

त्रिकुटा प्रत्येक टां 2 (1 अक्ष=4 टां न कि 2) (कल्क से तैल सिद्ध करे)

सप्तशतिकं प्रसारणी तैलम्

समूलपत्रामुत्पाट्य शरत्काले प्रसरणीम् ।
शतं ग्राह्यं सहचरात्छतावर्याः शतन्तथा ।।

बलाऽऽत्मगुप्ताश्वगन्धा-केतकीनां शतं शतम् ।
पचेच्चतुर्गुणे तोये द्रवैस्तैलाढकं भिषक् ।।

०(मस्तु मांसरसं चुक्रं पयश्चाढकमाढकम् ।)०
दध्या[1]ढकसमायुक्तं पाचयेन्मृदुनाऽग्निना ।।

द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलोन्मिता ।
तगरं मदनं कुष्ठं केशरं मुस्तकं त्व[2]चम् ।।

रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका ।
तथा मेदा महामेदा जीवकर्षभकौ तथा ।।

शतपुष्पा व्याघ्रनखं शुण्ठी देवाह्वमेव च ।
काकोली क्षीरकाकोली वचा भल्लातकन्तथा ।।

पेषयित्वा समानेतान् साध[3]नीया प्रसारणी ।
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत् ।।

यत्र यत्र प्रदातव्या तन्मे निगदतः शृणु ।
कुब्जानामथ पङ्गूनां वामनानां तथैव च ।।

यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः ।
वातशोणितदुष्टानां वातोपहतचेतसाम् ।।

---

० 'मस्तु मांस·······आढकम्' पाठोऽयं ख. ग. पुस्तकयोः नोपलभ्यते ।

1 ग. दध्योदकं; ख. वध्योदक

2 ख. तु च

3 ग. मधुनीया, ख. ताधनीया

स्त्री-मद्य-क्षीणशुक्राणां वाजीकरणमुत्तमम् ।
वस्तौ पाने तथाऽभ्यङ्गे न[1]स्ये चैव प्रदापयेत् ।।

प्रयुक्तं शमयत्याशु वातजान् विविधान्गदान् ।।

टीका :—वचारकातीक स्यो पातजर परसारणी लीजै । पियाबांसो, टां 100, शतावरी को रस टां 100, सामसट (खिरेटी) टां 100, असगंध टां 100, कौंछबीज टां 100, केतकी टां 100 (सब का पंचाङ्ग 100-100 पल हैं टां. नहीं) पानी टं. 2800 (?) (2800 पल) । तिल का तैल सेर 10 टां 24 (1 आढक) दही को पाणी सेर 10 टां 24 (1 आढक), तगर, किस्तूरी, कूठ, नागकेसरि, मोथ, तज, सुरही, सीधो, पीपर, छड़, मंजीठ, मुलेठी, मेदा, महामेदा, जीवक, रिषभक, सौंफ, नख, सुंठि, देवदार, काकोली, क्षीरकाकोली, वचा, भिलावा, प्रत्येक टं 5 (2-2 तोला) । (इसे न खरपाक और न मृदुपाक किन्तु मध्यपाक कर उतारें)

## महाला[2]क्षादितैलम्

लाक्षा हरि[3]द्रा मञ्जिष्ठा कान्ति[4]का मधुकं बला ।
लाम[5]ज्जकं चन्दनञ्च गैरिकं नीलमुत्पलम् ।।

एषां भागान् समान् कृत्वा पचेत्तोये चतुर्गुणे ।
चतुर्भागावशेषन्तु भा[6]गं (गर्भं ?) चेमं समावपेत् ।।

हरेणुकं वेतसञ्च हयगन्धा तथैव च ।
पद्मकं चोरकं कुष्ठं देवदारु नखत्वचम् ।।

---

1 ख. ग. भोज्ये
2 ग. नि. 'बृहल्लाक्षादि तैलम्' इति नाम; ग. पुस्तके "लाक्षादि तैलम्" इति नाम
3 ग. नि. निशाच 4 ग. नि. फलिनी; ग. केनिला (फलिनी = प्रियङ्गुः, कान्ता = प्रियङ्गु) 5 ग. नि. ध्यामकं (ध्यामकं—कतृणं, लामज्जक = वीरणमूलवत)
6 ग. भागपञ्च

शतपुष्पा पुण्डरीकं मांसी मधुकमेव च ।
[1]एषाम[एभिर]क्षसमैः कल्कै °पाचयेच्चावशेषितम् ।।°

म[2]स्तुशुक्तारमालानामाढकाढकमावपेत् ।
क्षीराढकसमायुक्तं तैलप्रस्थं विपाचयेत् ।।

*लाक्षारसं तैल समं पूर्वं कृत्वा च बुद्धिमान् ।*
तदभ्यङ्गे प्रशंसन्ति [प्रशस्तं स्यात्] तैलं दाहनिवारणम् ।।

वातपित्तोद्भवं क्षिप्रं ज्वरमेतन्नियच्छति ।
सप्रलापं सतृष्णञ्च तालुशोषमथ भ्रमम् ।।

ग्रहोपसृष्टं वालञ्च रक्तसन्दूषिताश्चये । (सन्दूषणन्तथा ।)
एतत् तैलं प्रशमयेल्लाक्षादिकमिति स्मृतम् ।।

### अर्कतैलम्

अर्कपत्ररसे पक्वं हरिद्राकल्कसंयुतम् ।
साधयेच्छार्षपं तैलं पामां हन्ति विचर्चिकाम् ।।°

टीका :—आक के पत्तों के स्वरस को तैल सरसों से चौगुना लेवें व हल्दी का कल्क तैल से चतुर्थांश लेकर तैल पाक विधि से तैल सिद्ध कर लें। यह तैल पामा, (कच्छू) व विचर्चिका को दूर करता है ।

---

1 ख. ग. एभिः　*—* 'पाचये····शोषितम् अस्मिन् स्थाने ग. नि "कषायेणाथ पेषितैः" ।

2 ग. नि. दधि

°—° 'लाक्षारसं····बुद्धिमान्', पाठोऽयं ग. नि. नोपलभ्यते ।

° पाठान्तरम् यो. र. 'अर्कपत्ररसे पक्वं रजनीकल्कसंयुतम् ।
कटुतैलं हरेत्तूर्णं पामा-कच्छ्र-विचर्चिकाः ।।'

शा. '० नाशयेत्सार्षपं तैलं.

चक्र. 'अर्कपत्ररसे पक्वं कटुतैलं निशायुतम् ।
मनः शिलायुतं वाऽपि पामाकण्ड्वादिनाशनम् ।।'

(फिरङ्गवाय तैल)

झकलासै तैल मधि पक्व कीजै, फटकड़ी, तूथो, अग्नि उपरि फूला, चूना, खैर, हल्दी पिसी, कौला, पीसि चूर्ण कीजै। मैण पघलाइ मेल्हिजै। छाणि ककलास की औषध सब तेल मधि मेल्हिजे। तैल लकड़ी सौं रुडी लपेटीजै। फिरंग बाव की सर्व चांदी कै लगाजे नीका होइ।

अष्ट कट्वरतैलम्

पलाभ्यां पिप्पलीमूलनागरा[1]दष्टकट्वर[1]: ।
तैलप्रस्थः समो दध्नो गृध्रस्यूरुग्रहापहः ।।

अष्टकट्वरतैलेऽस्मिंस्तैलं सार्षपमिष्यते ।।
त[2]त्स्नेह-दाध्यकोद्भूतं (सस्नेहदोधकोद्भूतं) तक्रं कट्वर उच्यते ।

टीका :—(पींपरा और सौंठ ये दोनों आठ आठ तोले, मलाईयुक्त दही से बनाई हुई खट्टी छाछ 64 तोले, दही 64 तोला, सरसों का तेल 64 तोला। इन सभी से तैल सिद्ध कर लें। गृध्रसी व ऊरुस्तम्भ को यह तैल दूर करता है।)

छुछुन्दरीतैलम्

छुच्छुन्दर्या विपक्वन्तु क्षणात्तैलवरं ध्रुवम् ।
अभ्यङ्गान्नाशयेन् नृणां गण्डमालां सुदारुणाम् ।।

---

1 ग. नागरं अष्टकं पलं

2 ग. न स्नेह, मा. प्र. 'सस्नेहदधि सम्भूमं

टिः 'अष्टकट्वरतैले पिप्पलीमूलादिसमुदायात् पलाभ्यामित्याह'—चक्र.।
"पिप्पलीमूलनागरयोः प्रत्येकं पलमित्युक्तम्, निश्चलस्तु प्रत्येकं पलद्वयम् अथवा कल्कस्यात्यन्तमल्पीयस्त्वं स्यादित्याह अष्टकट्वरमिति"—वृन्दः ।
'अष्टगुणकट्वरं सस्नेहदधितक्रमिति'—तत्वचं.।

भल्लातकाद्यं तैलम्

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं बिडङ्गरजनीद्वयचित्रकैश्च ।
°(स्यान्[1]मार्कवस्य च रसेन निहन्ति तैलं–
नाडीं कफानिलकृतामपचीं व्रणाश्च ।।)°

(भिलावा, आक की जड़, काली मिरच, सीधा नमक, बायबिडंग, हल्दी, दारुहल्दी व चीते की जड, इन्हें भाङ्गरे के रस के साथ तैल में डालकर पाक करें व तैल सिद्ध कर लें। पाकार्थ औषधियों का कल्क 1 सेर, भांगरे का रुस 16 सेर, व तैल 4 सेर लें। इस तैल के प्रयोग से कफ एवं वातज नाडीव्रण, आपची और अन्य व्रण ठीक होते हैं।)

वर्षाभू-तैलम्[2]

शुष्कं मूलञ्च वर्षाभू रास्ना-दारु-महौषधम् ।
पचेद् द्वौ कौच तैलानि ज्वरशोथं विनाशयेत् ।।

(सूखी जड़ पुनर्नवा की, राठ, दारुहल्दी व सोंठ, इनमें से किन्हीं 2 से तैलों को सिद्ध करलें। ये ज्वर-शोथ-नाशक हैं।)

°–° 'स्यान्····व्रणाश्च', अस्मिन्स्थाने क. पुस्तके "कुष्ठेषु दुष्टव्रणकच्छुविर्चचिदद्रु पामाभगन्दर–गदं हृपचीं व्रणञ्च।"

1 वृ. वै. 'स्यामार्कजेन च····'

2 योगोऽयं ख. पुस्तके नोपलभ्यते

अथ नवमोऽधिकारः

# स्त्रीचिकित्सा

( वातासृग्दरहरयोगः )

मधुसौवर्चलाजाजी-मधुकं नीलमु[1]त्पलम् ।
[2]पिबेत् क्षीर[०]युतं नारी वातासृग्दरपीडिता ।। 1 ।।

टीका :—काला नमक, श्वेत जीरा, मुलेठी व नीलोफर का चूर्ण, मधु व क्षीर मिलाकर लेने से वातासृग्दर रोग में लाभ होता है। वृद्धवैद्योपदेशानुसार सौवर्चल व जीरा 4-4 रत्ती, मुलेठी और नीलोफर 2-2 रत्ती, मधु 6 माशा व 'क्षीर' के स्थान पर 'दही' 5 तोला लेना चाहिये ।

अथ वन्ध्याचिकित्सा

अथ[3] मुक्ताफलम[4]र्द्धमविद्ध[4]मृतुकालेऽर्द्धसुजातिफलेन ।
विद्रुमखण्डयुतं सपयस्कं पुत्रकरं युवती[5] त्रिदिनेषु ।। 2 ।।

इति स्त्री[6]चिकित्सा

टीका :—विना बिंधा मोती आधा, जायफल आधा और थोडा सा मूंगे का टुकड़ा, इनका चूर्ण ऋतुकाल में गोदुग्ध के साथ तीन दिन तक पीने से स्त्री पुत्रवती हो जाती है ।

स्त्रीचिकित्सा समाप्ता

---

1 क. नीलमूसलं  2 क. ख. पिवे  (3) ख ० वातासृग्दरपीडिता।। 1 ।। इति तिलक्वाथः (?) ।

० चक्र., ग.नि , भै.र., भा.प्र., र.र., वै. जी च 'क्षीर' स्थाने "दधि" पठितः ।

3 क. पुनः अथ  4-4 ख. ० मर्द्धविद्धं, क. ० मविद्धं  5 क. त्रिदिनस्थं, ख. प्रदिनस्थं चंदनं ।

6 ख. इति स्त्रीचिकित्साधिकार ।

अथ शिशुचि[1]कित्सा

शृ[2]ङ्गी प्रतिविषा रास्ना[2]श्चूर्णिता मधुना लिहेत् ।
शिशोः कासज्वर[3]च्छर्दि शान्त्यै वा[4] केवलां विषा[4]म् ।। 3 ।।

टीका :—काकडासिंगी, अतीस और रास्ना का चूर्ण मधु के अनुपान से लेने से शिशु के कास, ज्वर व छर्दि रोग नष्ट हो जाते हैं । अथवा केवल अतीस के चूर्ण के सेवन से भी बालकों के उक्तरोग नष्ट हो जाते हैं ।

---

1 क. चिकशाः, ख. पाठोयं न दृश्यते । अस्मिन्स्थाने—

'अ°पस्मारादिभूतेभ्यो बलिं सर्वत्र कल्पयेत् ।
पक्वापक्वं च शुच्यन्नं मत्स्यं मांसं सुरान्तथा ।।

पुष्पं धूपाक्षतान् गन्धं सदीपं दक्षिणादिकम् ।
चतुष्पथे क्षिपेद्रात्रौ शुद्धे नूतनखर्परे ।।' इति पाठः

° टि. बालानां स्कन्दापस्मारादयो नवग्रहाः ग्राह्याः न त्वपस्माररोगः ।

2-2 ख. श्री प्रतिविषकृष्णा 3-3 क. कासज्वरहरं शैत्यं चा ख. शैत्यं वा के च
4 क. विषम

पाठान्तरम् 1) चक्र, भै.र., वृ. वै. च

'°शृङ्गीं समुस्तातिविषां° विचूर्ण्य
लेहं विदध्यान् मधुना शिशूनाम् ।
कास-ज्वरच्छर्दिभिरर्दितानां
समाक्षिकां चाऽतिविषां तथैक*म् ।।'

(2) °—° वृ.यो.त. 'शृङ्ग्यब्दकृष्णाऽतिविषं.'

(3) यो.त. शृङ्गीं सकृष्णाब्दविषां.

(4) * र. र. घनैकाम् (?)

(5) वृ.वै. "घन-कृष्णा-ऽरुणाशृङ्गी-चूर्णं क्षौद्रेणसंयुतम् ।
................"

अस्मात्परं ख. 'बद[1]री-सर्वरसयोश्चूर्णं मोचरसस्य[1] च ।
छागक्षीरेण संयुक्तं वातातीसारशान्तये ।।

सकर्पूरलता[2]द्राक्षा-लाजैला पक्वदाडिमम् ।
सखर्जूरं लवङ्गञ्च सयष्टि चन्दनद्वयम्[3] ।।

सकुहं बालके दद्यादुष्णकाले तृ[4]षायुते ।
बारंबारम्प्र[5]पूर्येत पिपासाशान्तिहेतवे ।।

माजूफलञ्च खदिरं चूर्णं बालस्य रोगनुत् ।।

इति श्रीयोगशास्त्रे योगज्ञाने आनन्दसिद्धकृतः बालचिकित्साधिकारः' ।

इत्यधिकः पाठः

(इति नवमोऽधिकारः)

---

1-1 ख. "वदिरिसर्परसं योश्चूणी मोचरसंमि"

2 ख. गटा(?) 3 ख. द्वयः

4 ख. पु तृ युते 5 ख. मभूर्येत

अथ दशमोऽधिकारः

## अथ-वमन-विरेचन-न[1]स्य-निरूह-अनुवासन-रक्तस्राव, बस्तिकर्मप्रतीकारो लिख्यते

वमनं रेचनं नस्यं निरूहश्चानुवासनम् ।
रक्तस्रावं बस्तिकर्म धातुमारणकन्तथा ।। 4 ।।

टीका :—ग्रन्थकर्ता का संकेत है कि अब वे (1) वमन, (2) रेचन, (3) नस्य, (4) निरूहबस्ति, (5) अनुवासनबस्ति, (6) रक्तस्राव, (7) अन्यबस्तिकर्म तथा (8) धा°तुमारण सम्बन्धी वर्णन करेंगे ।

(अवामनीयाः)

तिमिरी ज[2]ठरी गुल्मी त्रिदोषी व[3]स्तिपीडितः (?) ।
गुर्विणी सुकुमारश्च न[4]वाम्याः पाण्डुरोगिणः ।। 5 ।।

टीका :—तिमिरी, जठरी, गुल्मी, त्रिदोषी, बस्ती से पीड़ित गर्भिणी, सुकुमार व पाण्डुरोगी वमन कराने योग्य नहीं हैं ।

वमनार्हाः

बल[5]वन्तं कफव्या[6]प्तं हृल[7]लासादिनिपीडितम्[8] ।
तथा वमनसात्म्य[9]ञ्चधीरचित्तञ्च वामयेत् ।। 6 ।।

टीका :—बलवान व कफावृत्त व्याधियों से ग्रसित व हृल्लासादि रोगों से पीडित मनुष्य जिसे वमन कराना अनुकूल पड़ता हो, तथा जो धैर्यवान् हो, उसे वमन कराना चाहिये ।

---

1 क. नास 2 क. जठरा 3 क. ख. वर्त्ति 4 क. नश्चम्यां
° धातुमारणविषयक वर्णन क. प्रति में नहीं है ।
5 क. बलं 6 ख. व्ययप्तं 7 ख. हृलासादि 8 ख. ॰ तां 9 ख. सात्मं

पक्षे पक्षे तु वमनं मासे मासे विरेचनम् ।
°षण्मासे च शिरामोक्ष एवं व्या[1]धिक्षयो भवेत्° ।। 7 ।।

टीका :—हरेक पक्ष के पश्चात् वमन, हर महीने विरेचन, हर छः महीनों से शिरामोक्ष कराने से व्याधि (*कुष्ठ) नष्ट होती है ।

°पूर्वाह्णे वमनं देयं मध्याह्णे तु विरेचनम् ।°
अपराह्णे (सुपा[2]च्यान्नं) तस्मै दद्याद्विचक्षणः ।। 8 ।।

टीका :—पूर्वाह्ण में वमन, मध्याह्ण में विरेचन व अपराह्ण में सुपाच्य अन्न देना चाहिये ।

शरत्काले वसन्ते च प्रावृ[3]ट्काले च देहिनाम् ।
वमनं रेचनं चैव कारयेत्कुशलो[4] भिषक् ।। 9 ।।

टीका :—कुशल वैद्य को चाहिये कि वह साधारणतया शरत् वसन्त व प्रावृट् (वर्षा) काल में वमन व विरेचन करावे ।

(वमन-विरेकार्हाः)

कुष्ठार्शक्रमिवी[5]सर्प-वाता[6]सृक्पाण्डुरोगिणः ।
[7]वाम्याश्चापि विरेकार्हाः, °गुर्विणी क्षयदुर्बलाः°[7] ।। 10 ।।

(न वाम्या न विरेकार्हाः················(?) )

टीकाः—कुष्ठ, अर्श, क्रमि, विसर्प व वातरक्त के रोगी वमन व विरेचन के

---

1 यो.र., वृ. यो. त., भै.र., चक्र. च 'कुष्ठ' °—° पाठोऽयं ख पुस्तके नोपलभ्यते ।
* (भै.र. कुष्ठाधिकार में भी यह श्लोक है)
2 क. ख. किंचिदावृत्तिः ? °—° पाठोऽयं ख. पुस्तके नोपलभ्यते ।
3 ख. प्रकटीले 4 ख. कुशभिषक
5 क. वासर्प 6 ख. वातामृत्पीडरोगिणा । 7-7 ख. विरेच्युस्तु विरेच्यास्युर्भेदक्षयदुर्बला । क. वमनं च विरेचास्यु°····
°—° अयमंशोऽसमीचीनः प्रतिभाति, गुर्विण्यादीनां वमन-विरेचनानर्हत्वात् ।

योग्य हैं (श्लो. 5 में पाण्डु रोगी को 'अवाम्य' कहा जा चुका है अतः पाण्डुरोगी, गर्भिणी व क्षय से दुर्बल हुए मनुष्य वमन व विरेचन योग्य नहीं हैं)।

(विरेचन-भेदाः)

भेदनञ्चानुलोमञ्च रेचनं स्रं[1]सनन्तथा।
शोध[2]नं, पञ्चभेदाः स्युर्भेदनस्येति तद्यथा ॥ 11 ॥°

टीका :–भेदन के पांच भेदों के नाम (1) भेदन, (2) अनुलोमन, (3) रेचन, (4) स्रंसन व (5) शोधन हैं—यथा

तिक्ता पथ्या निशोत्री स्यात्कृतमालेश्वरीफलम्।
पञ्चविधं क्रमेणैतद्विशेषेण यथा शृणु ॥ 12 ॥°

टीका :—भेदनादि के लिये क्रमशः ये द्रव्य हैं—भेदनार्थ कटुकी, अनुलोमनार्थ हरड, रेचनार्थ निशोथ, स्रंसनार्थ अमलतास और शोधनार्थ देवदाली फल।

°त्रिवृता नागरं पथ्यानन्दा[ऽनन्ता?] हिमविरेचनम्।

टीका :—निशोथ, सोंठ, हरड़ व जवासा ये ठंडे विरेचन द्रव्य हैं।

(शिशिरे वसन्ते च विरेचनम्)

पिप्पलीं नागरं सिन्धुं श्या[2]मा त्रिवृतया सह।
लिहेत् क्षौद्रेण शिशिरे वसन्ते च विशेषतः ॥ 13 ॥

टीका :—पिप्पली, सोंठ, सैंधव व कालीनिशोथ के चूर्ण को मधु के साथ वसन्त व शिशिरऋतु में विरेचनार्थ देना चाहिये।

---

1 क. स्रंसनं 2 क. शोषद्वः ° श्लोकोऽयं ख पुस्तके नोपलभ्यते।
* अत्रोक्तौषधयः केवलमुदाहरणत्वेनैव कथिताः ज्ञेयाः। आर्षग्रन्थोपनिबद्धाः अन्यौषधयोऽपि ग्राह्याः स्युः।
2 क. श्यामाया वृता सह

(ग्रीष्मे)

त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम्○ ।। 14 ।।

टीका :—निशोथ चूर्ण में समभाग शर्करा मिलाकर ग्रीष्म ऋतु में विरेचन करना चाहिये ।

(वर्षाकाले)

○त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ।
समृद्वीकारसक्षौद्रं वर्षाकाले विरेचनम् ।। 15 ।।

टीका :—वर्षा में निशोथ, इन्द्रजौ, पीपर व सोंठ के चूर्ण को द्राक्षारस व मधु के साथ विरेचनार्थ देना चाहिये ।

(शरदि)

त्रिवृद्दुरालभामुस्ताशर्करोदीच्य[1]चन्दनम् ।
द्राक्षाम्बुना सयष्टीकं शीतलञ्च घनात्यये ।। 16 ।।○

टीका :—शरद ऋतु में निशोथ, धमासा, नागरमोथा, शर्करा, नेत्रवाला, सफेद चन्दन व मुलेठी के चूर्ण को द्राक्षारस के साथ मिला कर विरेचनार्थ देना चाहिये ।○

(हरीतक्यादि-विरेचनम्)

○पद-मद-कर्ण-कु-भृष्टं
हरीतकी-भ्रमुक-विश्व-लवणानाम् ।

---

○–○ 'त्रिवृता····विरेचनम् । पाठोऽयं ख. पुस्तके नोपलभ्यते ।

1 क. दार्व्यचन्दनैः
○–○ पाठोऽयं ख. पुस्तके नोपलभ्यते ।
* हेमन्ते :—त्रिवृतां चित्रकं पाठामजाजीं सरलां वचाम् ।
हेमक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ।।
शा. वि.फ.प्र., उ.ख. 4/23-24

○–○ क. 'पदमदकरणकरांवुमहरीतकी-क्रमुकविश्वलवणानां ।
उष्णोदकेन पीतं नरपतियोग्यं विरेचनं श्रेष्ठः ।।'

ख. पाठोऽयं नोपलभ्यते
पाठान्तरम् यो.र.—

उष्णोदकेन पीतं नरपतियोग्यं
विरेचनं श्रेष्ठम् ।। 17 ।।°

टीका :—हरडै री छालि सेकी टां 4, चवलीसुपारी सेकी टां 3, सुंठी सेकी टां 3 (?) (2), सिंधव सेकियो टां 1; उषध वांटि कपडछाणि करि उष्ण पाणी सूं सगला उसा दीजई । नरपति योग विरेच होवै ।

इति हरीतक्यादिविरेचनम् ।

अथ नाराचकं विरेचनम्

°कर्णमात्रा भवेत्कृष्णा त्रिवृता च पलोन्मिता ।
सिता पलञ्चविज्ञेया चूर्णमेकत्र कारयेत् ।। 18 ।।

कर्षोन्मितं लिहेदे[1]तत् क्षौद्रेणाध्माननाशनम् ।
गा[2]ढविट्कोदरश्लेष्म-पित्तशूलानि नाशयेत् ।। 19 ।।°

टीका :—पीपली टां 4, निशोथ टां 16, निवात टां 16, उषध वांटि कपड-छांण करि सहित (मधु) मांहि उषध टां 4 मेलि अवलेही कीजै । विरेच हुवै ।

पञ्चसमं चूर्णम्

°शुण्ठी हरीतकी कृष्णा त्रिवृत्सौवर्चलन्तथा ।
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ।। 20 ।।

---

'पादमदकर्णहस्तैः पथ्या त्रिवृतं च नागरं लवणम् ।
निष्क्वथितपीतसारं नरपतियोग्यं विरेचनं भवति ।।'

1 क. लिहेदंत 2 क. गाढवकोदरकफं °–° ख. पाठोऽयं नोपलभ्यते पाठान्तरम् वृ.वै., वृ.यो.त., चक्र., र.र., यो.त., ग.नि. भै.र., भा.प्र. च—
'खण्डसमं त्रिवृतासमुपकुल्या-कर्षसम्मितां श्लक्ष्णम् ।
प्राग्भोजनस्य समधु विडालपदकं लिहेत्प्राज्ञः ।।
एतद्गाढपुरीषे पित्ते कफे च विनियोज्यम् ।
स्वादुर्नृपयोग्योऽयं चूर्णं नाराचको नाम्ना ।।'

°ज्ञेयं पञ्चसमंचूर्णमेतच्छूलहरं परम् ।
आध्मानजठ राशोघ्नमामवातहरं स्मृतम् ।। 21 ।।°

टीका :—सुंठि, हरडै, पिपलि, निसोति, सौंचल सम मात्र करि वांटि छाणि टां 4 लीजै उष्णजल सूं विरेच लागै ।

अथ अभयादिमोदकः

°अभया पिप्पलीमूलं मरिचं विश्वभेषजम् ।
त्वक्पत्रपिप्पलीमुस्ता-विडंगामलकानि च ।। 22 ।।

एतानि समभागानि दन्ती च त्रिगुणा भवेत् ।
त्रिवृद[1]ष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा ।। 23 ।।°

[2]मधुना मोदकान्कृत्वा चाक्षमात्रप्रमाणतः[2] ।
एकैकं भक्षयेत्प्रातः शीतं चानु पिवेज्जलम् ।। 24 ।।

ता[3]वद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ।
पानाहारविहारेषु भ[4]वेन्निर्यन्त्रणः[4] सदा ।। 25 ।।°

---

°—° पाठोऽयं ख पुस्तके नोपलभ्मते । ग. नि. पाठान्तरम्—
'पथ्यानागरजीरकाख्यरुचकैः श्यामान्वितैः पञ्चभिः
श्चूर्णं पञ्चसमं समस्तगदहृत् कायाग्निसन्दीपनम् ।
प्राणोत्साहविवर्द्धनं रुचिकरं गुल्मघ्न-प्लीहापहं
प्रत्याध्मान-गरादिरोगशमनं सामानिले पूजितम् ।।'

1 क. तृवृताष्टद्विगुणो °—° पाठोऽयं ख. पुस्तके नोपलभ्यते ।

2-2 ख. रेकंकृत्वा चाक्षिमात्रप्रमाणत

3 ख. तउ. 4-4 ख. मवेत्रयत्ततः

° अस्मात्परं—"विषमज्वरमन्दाग्नि-पाण्डुकासभगन्दरान् ।
दुर्नामकुष्ठगुल्मार्शोगलगण्डभ्रमोदरान् ।।
विदाहप्लीहमेहांश्च यक्ष्माणं नयनामयान् ।
वातरोगस्तथाऽऽध्यानं मूत्रकृच्छ्राणि चाश्मरीन् ।। (निरन्तर)

टीका :—हरडै, पिपलामूल, मरिच, सुंठि, पत्रज, तज, पीपलि, मोथ, विडंग, ग्रांवला, उषध (1-1 टां) एकठा कीजै। दांतणि टां 3, निशोति टां 8, निवात टां 6, सर्व उषध वांटि छाणि सहित सूं गुटिका बांधीजै। बहेडा प्रमाण गौली / प्रभाति ठंडा पाणी सूं लीजै। उन्हा पाणी पीजई तिवारइ विरेच हुवइ। क्रिया (परहेज) कांई न राखीजइ ॥

(स्नुही-दन्तीघृतम्)

घृततुल्यं स्नुहीक्षीरं दन्तीनीरं तु तत्समम्।
सम्य[1]गाभ्यां घृतं पक्वमामं स[2]म्पातयत्ययम् ॥ 26 ॥

टङ्कमात्रं पिबेज्जन्तुः स्तम्भः स्या[3]च्छीतवस्तुभिः ॥

टीका :—थूहर का दूध व घृत समभाग व दोनों के बराबर दन्तीनीर मिला कर घी पकावे। इसके प्रयोग से ग्रांव गिरजाती है। इसकी मात्रा टंकमात्र है व शीतल वस्तुग्रों के लेने से इस योग से होते हुए विरेचन रुक जाते हैं।

(एरण्डतैलविरेचनम्)

एरण्डतैलं सक्षीरं रेचनं शुद्धदेहिनाम्।
तद्वदेवाथवा[4] वै स्याच्छुण्ठीचूर्णयुतम्पयः ॥ 27 ॥

टीका :—एरण्ड तैल को (उचित मात्रा में) दूध के साथ लेने से रेचन होता है। ग्रथवा उस दूध में सूंठ मिला लेनी चाहिये (?)।

---

पृष्ठपार्श्वोरुजघन-जानूदररुजं जयेत्।
सततं शीलनादेव पलितानि विनाशयेत् ॥
ग्रभयामोदका एते रसायनमनुत्तमम् ॥"
बृ.यो.त. इत्यधिकः पाठः।

1 क. समग्राभ्यां        2 क. संपातयत्यया, ख. संपातयत्यथः

3 ख. छानवस्तुभिः

4 क. ०वैस्या छुटीचूर्णयुता पयः

(स्नुहीक्षीरपक्वपिप्पलीयोगः)

[1]स्नुहीक्षीरयुता वह्नौ पिप्प[1]लीः परिपाचयेत् ।
एक-द्वि-[2]त्र्यादियोगेन सम्यगा[2]मः प[3]तत्यधः ।। 28 ।।

टीका :—अग्नि पर, थूहर के दूध में डालकर पीपरें पचा लेवें । एक, दो या तीन पीपर, वयोबलानुसार, देने से आँव अच्छी तरह नीचे गिर जाती है ।

(जयपालादिविरेचनम्)

जयपा[4]लश्चतुर्भागस्त्रिभागा कटुकी तथा ।
द्विभागं गैरिकञ्चैव कौमारीरसमर्दितम् ।। 29 ।।

°शाणार्द्धं भिषजा देयं जानता मरिचान्वितम् ।
यावद्भिर्मरिचैः सार्धं तावद्वारं विरेचनम् ।। 30 ।।°

टीका :—जयपाल 4 भाग, कटुकी 3 भाग, तथा स्वर्णगैरिक 2 भाग को घृतकुमारी के रस से मर्दन करें करें व आधा शाण मात्रा मरिच के साथ देवें । इस योग के साथ जितनी मरिचें दी जावेंगी उतने ही रेचन हो जावेंगे ।

(अन्यरेचनम्)

जय[5]पालसमं चक्रु[6](?) (चुक्रं?) तुर्यांशं मरिचान्वितम् ।
ज्ञात्वा बलाबलं देवं भेदनं सर्वरोगजित् ।। 31 ।।

टीका :— जयपाल व चक्रु (?) (चुक्र=चूका) समभाग लें व तुर्यांश मरिच

---

1-1 ख. सुनही क्षीराग्नियोगेन, क. ० क्षीरेणाग्नि ० 2 क. ०त्र्यादितंद्योगैः, ख. आदितर्योगै 2 क. गामा, ख. गामं 3 क. पततपद, ख. पतित्यध

4 क. ख. जैपालका० °–° 'शाणर्ध... विरेचनं', अस्मिन्स्थाने ख. पुस्तके "सारपार्धं तवद्वारं विरेच्यते" इत्येव पाठः ।

5 क. अजयपाल 6 ख. चूक्रं

मिलाकर, बलाबल की कल्पना करके मात्रा निर्धारित करलें। यह योग सर्वरोगजित् है व भेदन करता है।

### इच्छाभेदी रसः

नेपालकं पारदटङ्कणाक्षं क्षारो हरिद्रा[1] मरिचानि पथ्या।
एरण्डबीजानि सगन्ध[2]कञ्च इच्छाप्रभे[3]दी रसचक्रव[4]र्ती ।। 32 ।।

टीका :—शुद्ध जयपाल, शुद्धपारद, सुहागा, बेहड़ा, यवक्षार, हल्दी, कालीमरिच, हरड, एरण्डबीज व गन्धक, सभी सम भाग लेवें व सूक्ष्मचूर्ण करलें। रसों का चक्रवर्ती यह इच्छाभेदी नामक रस है। इसके सेवन से मलसञ्चयजन्य रोग नष्ट होते हैं।

### (इच्छाभेदी रसः द्वितीयः)

श[5]म्भोर्बीजं सट[6]ङ्कं सब[7]लिमरिचं शृङ्गवेरञ्च तुल्यम्
क्षिप्त्वा नैकुम्भबीजं शि[8]खिसमतुलितं मर्दयेदेकयाम[9]म्।
इच्छाभेदी[10] रसोऽयं प्रवलमलहरो रेचनो रोगहर्ता
गुञ्जामात्रं प्रदद्याच्छिशिरजलयुतो [11]नोष्णकांक्षी कदाचित्[11] ।। 33 ।।

टीका :—शुद्धपारद, शुद्धटंकण, शुद्धगन्धक, मरिच व सोंठ, इन सबको समभाग लेकर शुद्धजयपाल तीन भाग मिलावें। फिर एक प्रहर खरल करें। यह इच्छाभेदी रस गुञ्जा (1 रत्ती) मात्र शीतलजल से देने से प्रवल मल को दूर करता है। गरम उपचार कदापि न दें।

---

1 र.यो.सा. 'हरिद्रा' स्थाने "यवानी" इति पठितः किन्तु रसेन्द्रसारसङ्ग्रहे 'हरिद्रा' इत्येव पाठो दृश्यते।　　2 क. ख. सगंधकानि　　3 क. प्रभेदो, ख. इच्छापरिभेदो　　4 क. वर्त्ति

5 क. शंभावीजं,　ख. शंभोवीजी　　6 र. यो. सा. 'सटङ्क' स्थाने "च सिन्धु" इति पाठः　　7 क. तत्सिवसमरिच　　8 क. शषि　　9 क. यामिं ख. ०युक्तं

10 क. ख. ० भेदो　　11-11 पाठोऽयं ख. पुस्तके नोपलभ्यते।

नाराचरसः

[1]भृष्टटङ्कणतुल्यन्तु मरिचं सूतकन्तथा[1] ।
गन्धकं पिप्पली शुण्ठी द्वौ द्वौ भागौ प्रकल्पयेत् ।। 34 ।।

स[2]र्वतुल्यं क्षिपेच्छन्तीबीजं[3] निस्तुषितं भिषक् ।
गु[4]ञ्जैकं रेचनं दद्यान्नाराचोऽयं महारसः ।। 35 ।।

°आध्याम-मलविष्टम्भमुदावर्तञ्च नाशयेत् ।। 36 ।।°

टीका :—भुनासुहागा, मरिच व शुद्धपारद ये सभी एक एक भाग, शुद्धगन्धक, पीपल और सोंठ ये सभी दो दो भाग, इन सबके बराबर शुद्ध दन्ती-बीज मिलावे । पारदगंधक की नीलवर्ण कज्जली करके उसमें अन्य सभी द्रव्य मिलावे व खरल करे । इसकी एक रत्ती की मात्रा गरम पानी के साथ देने से यह नाराचमहारस आध्मान व मलका और विष्टम्भ व उदावर्त रोग का नाश करता है ।

अन्यरेचनम्

पारदं टङ्कणं शुण्ठी पिप्पली चेति कार्षि[5]कम् ।
हेमाह्वा पलमात्रं स्याद् दन्तीबीजन्तु तत्समम् ।। 37 ।।

विचूर्ण्यैकत्र सर्वाणि गोदुग्धेनैव साधयेत् ।
त्रिगुञ्जै रेचनं दद्याद् विष्टम्भाध्मानशूलहृत् ।। 38 ।।

टीका :—शुद्धपारद, टङ्कण, सूंठ, पीपर—ये सभी एक एक तोला, सत्या-नाशी एक पल, व दन्तीबीज एक पल । इन्हें गोदुग्ध में साधे ।

---

1-1 क. सूंठं टंकणकं तुलं सूतकं; ख. मरिचं तुल्य सूतकं इत्येव ।
2 क. ख. सर्वैस्तुल्यं 3 क. क्षिपंछंती 4 र-यो-सा-द्विगुञ्जं, क. गुजैफंरेच-न्दन दद्या °–° 'आध्मान····नाशवेत' अस्मिन्स्थाने र.यो.सा. 'गुलम्प्लीहोदरं हन्ति पिवेत्तं कोष्णवारिणा' इति पाठः । 5 क. कार्षिकोः

इसकी 3 रत्ती की मात्रा देने से रेचन होकर विष्टम्भ, आध्मान व शूल नष्ट होते हैं।

इति श्रीपरमहंस-परिव्राजकाचार्य-श्री नृसिंहभारती तत् शिष्य-परमहंस परिव्राजकाचार्य-श्रीआनन्दभारती विरचितायां आनन्दमालायां विरेचनाधिकारः समाप्तः।

(इति दशमोऽधिकारः)

अथ एकादशोऽधिकारः

# अञ्जनाधिकारः

(तिमिरे त्रिफलायोगाः)

जाता[1] रोगा विनश्यन्ति न[2] भवन्ति[2] कदाचन ।
त्रिफलायाः कषायेण प्रातर्नयनधावनात् ।। 1 ।।

टीका :—प्रतिदिन प्रातःकाल त्रिफला के कषाय से नेत्रों को धोने से, उत्पन्न हुए नेत्ररोग नष्ट हो जाते हैं व फिर नेत्ररोग कभी पैदा नहीं होते ।

अयसि[3] क्वथिता त्रिफला सघृ[4]तं ससिता निशापीता ।
अन्धम[5]नन्धं कुरुते पापिन[6]मिव निर्मलगङ्गा ।। 2 ।।

टीका :—लोहे के पात्र में क्वथित त्रिफला को (उचित मात्रा में) घृत व शर्करा के साथ रात में पीने से अन्धा भी दृष्टि को प्राप्त कर लेता है । जैसे कि निर्मलगङ्गा में स्नान से पापी पापमुक्त हो जाता है ।

अभयैका यो[7]जनीया द्वावेवा[8]त्र विभीतकौ[8] ।
धात्रीफलानि चत्वारि त्रि[9]फलेयं सशर्करा[9] ।। 3 ।।

लिहेद्वा सघृतं क्षौद्रं दशामृ[10]तहरीतकी ।। 4 ।।

टीका :—हरड 1, बेहडा 2 व आंवला 4, इस अनुपात से बना त्रिफलाचूर्ण व चूर्ण के बराबर शर्करा मिलाकर नेत्र रोगी को घृत व मधु (विषम मात्रा में) के साथ सेवन करना चाहिये । अथवा इसी पुस्तक के

---

1 क. याता 2-2 क. विनश्यन्ति
3 ख. अयस्थ 4 क. ख. सधृता 5 क. अंधमनंतं 6 पापिनम्पव
7 क. स्योज्योंन्पीया, ख. स्योजोजीया 8-8 क. द्वावेवासुतुनिभीतकाः, ख. वाचे-वास्कुविभीतक 9-9 क. त्रिफलां समशर्करां, ख. त्रिफलासमशर्करा
10 क. दशामृता; टि. इतः पूर्वं 'दशामृतहरीतकी योगोऽवलेहाधिकारे प्रोक्त एव ।

अवलेहप्रकरण में प्रोक्त 'दशामृतहरीतकी' को घृत व मधु के साथ लेना चाहिये ।

(नेत्रस्रावचिकित्सा)

पथ्याऽक्षधात्रीफलमध्यबीजै—
स्त्रि-व्यदेकभागैर्विदधीतवर्त्तिम् ।
तया[1]ऽञ्जयेदस्रुमतिप्रवृद्ध—
म[2]क्षणोर्हरेत्कष्टमपि प्रपाक[3]म् ।। 5 ।।

टीका :—हरड़ के बीजों की मींगी 3 भाग, बेहडे के बीजों की मींगी 2 भाग, आंवले के बीजों की मींगी 1 भाग इन्हें जल से पीसकर बत्ती बना लेवें । इसे घिसकर आंखों में आंजने से बढे हुए नेत्राश्रु (नेत्रस्राव) तथा बढा हुआ नेत्रकष्ट नष्ट होता है ।

(अथ रोपणी रसक्रिया)

बब्बूलदलनिःक्वाथो लेहीभूतस्तदञ्जनात् ।
नेत्रस्रावं हरत्याशु मधुयुक्तो न संशयः ।। 6 ।।

टीका :—बब्बूल की पत्तियों का क्वाथ बनाकर उस जल को जलाकर अवलेह जैसा बना लेवे । इसको मधु के साथ मिलाकर अञ्जन करने से नेत्रस्राव निःसन्देह नष्ट होता है ।

(गृध्रदृष्ट्यञ्जनम्)

द्वात्रिंशदभयामज्जास्तिस्रः पिप्पलिका[4]स्तथा ।
चत्वारि मरिचान्येतदञ्जनं गृ[5]ध्रदृष्टिकृत् ।। 7 ।।

टीका :—बत्तीस हरड के बीजों की मींगी, पीपरें 3, और 4 कालीमिरच मिलाकर योग्य मात्रा में अञ्जन करने से दृष्टि गृध्रसरीखी हो जाती है ।

---

1 क. तस्यांजनादग्र०, ख. ०जनांदश्र. 2 ख. क्षणं 3 मै. र. प्रवृद्धम्
4 क- पिप्पलिजातयः ख. पिपलीयातपः 5. मृदृदिष्टिकृत

चन्द्रोदयवर्त्तिः

*[1]हरीतकी वचा कुष्ठं पिप्पली मरिचानि च ।
विभीतकस्य मज्जा च शङ्ख[2]नाभिर्मनः शिला[1] ।। 8 ।।*

[3]एतानि समभागानि छागीक्षीरेण पेषयेत् ।
°छायाशुष्कां कृतां वर्तिं नेत्रयोगेषु योजयेत् ।। 9 ।।°

अर्बुदं पटलं काचं तिमिरं रक्तराजिकाम् ।
अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति[3] ।।

इति चन्द्रोदयवर्त्तिः

टीका :—हरड़, बच, कूठ, पीपर, मिरच, बहेड़े की गुठलियों की मींगी, शंखनाभि, और मैणसिल, सब को समभाग लेकर बकरी के दूध में खरल करके बत्ती बना लें व छायाशुष्क करलें। इस वर्त्ति को नेत्र-रोगों में प्रयुक्त करना चाहिये। इसके प्रयोग से अर्बुद, पटल, काच, तिमिर, रक्तराजिका, अधिमांस, मल व रतौंध रोग नष्ट होते हैं।°

---

*1-1 एष श्लोक'श्चन्द्रोदयावर्त्ति' नाम्नि योगे भा प्र., चक्र., भै.र. च वर्तते ।

2 क. शरिताभि॰

3-3 इदं श्लोकद्वयं "चन्द्रप्रभावर्ति" योगे चक्र., भै.र., च दृश्यते । तत्र चन्द्रोदयवर्त्ति-योगे 'अजाक्षीर' स्थाने 'गोदुग्धं, इति पाठः

°–° पाठोऽयं ख. पुस्तके नोपलभ्यते ।

° इस योग का पहला श्लोक ज्यों का त्यों 'चन्द्रोदयवर्ति' नामक योग में भा.प्र., भै.र. व चक्र आदि ग्रन्थों में मिलता है व आगे के दोनों श्लोक उनमें "चंद्र-प्रभा" वर्त्ति" योग मैं हैं। अर्थात्, सभी औषधियां, सिवाय बकरी के दूध के, 'चंद्रोदयवर्त्ति' के ही घटक हैं किंतु वकरी का दूध व फलश्रुति 'चंद्रोदय वर्त्ति' के न होकर "चन्द्रप्रभावर्त्ति" के हैं।

अथ कुसुमिकावर्त्तिः°

अशीतिस्ति[1]लपुष्पाणि षष्टिः पिप्पलितण्डुलाः ।
जातिपु[2]ष्पाणि पञ्चाशन् मरिचानि तु षोडशः ।। 11 ।।

एषा कुसुमिकावर्ति[3]र्गतं चक्षुर्निव[4]र्त्तयेत् ।।

टीका :—तिलां रा फूल थान (नग) 80, पिप्पलीथान 60, जाय रा फूल 50, मिरच 16 । नेत्ररोग जाइ । (यह कुसुमिका नामक वर्त्ति गत-चक्षु को पुनः चक्षुदान करती है ।)

अथ सुखावतीवर्त्तिः

कलक[5]स्य फलं शङ्खं सैन्धवं त्र्यूषणं सिता ।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला ।। 12 ।।

°सर्वमेतत्समं कृत्वा छाग[6]क्षीरेण पेषयेत् ।°
तिमिरं पटलं काच[7]मर्मं शुक्रं व्यपोहति ।। 13 ।।

कण्डुक्लेदार्बुदान्हन्ति मलञ्चाशु सुखावती ।। 14 ।।

टीका :—निर्मली के बीज, शङ्खनाभिभस्म, त्र्यूषण, सीधानमक, त्र्यूषण वा मिश्री, समुद्रफेन, रसोत, शहद, बिडंग व मैणसिल, प्रत्येक समभाग बकरी के दूध में पीस कर बत्ती बना लेंवे । यह वर्त्ति तिमिर, पटल, काच, अर्म, शुक्र, कण्डु, क्लेद, अर्बुद और मैल आदि नेत्र रोगों का शीघ्र नाश करती है ।

---

° चक्र., भै.र. च कुमारिकावर्तीति नाम

1 क. सुतुल, ख. असीततलपुषानि षष्टिर्मागधिका कणा

2 क. जातामुकुलानि, ख. 'जातीमूकलानि पंच समरिचानि तु षोडस'

3 क. गात    4 ख. चक्षुनिवर्तते

5 ख. केतकसि फलं

6 यो. र. नारीक्षीरेण    7 क. कालं नर्म

°—° 'सर्वमेतत्.......पेषयेत्', अस्मिन्स्थाने चक्र., भै.र. च "कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति ।" इति पाठः ।

अथ गैरिकादिवर्त्तिः

प[1]त्र-गैरिककर्पूरयष्टिनीलोत्पलाञ्जनम् ।
नागकेशरसंयुक्तमशेषतिमिरा[2]न्तकृत् ।। 15 ।।

टीका :—तेजपात, गैरिक, कर्पूर, मुलहटी, नीलकमल, अञ्जन, नागकेशर, इन्हें समभाग लेकर खरल कर आंखों में आंजने से समस्त तिमिर-रोग नष्ट होते हैं ।

°अथ प्रचेत[3]ना गोली उन्मादापस्मारे

त्र्यूषणं हिङ्गु[4] लवणं[4] वचा कटुकरोहिणी ।
शिरीषनक्तमाला[5]नां बीजं श्वेताश्च सर्षपाः ।। 16 ।।

गोमूत्रपिष्टैरेतैस्तु वर्त्तिर्नेत्राञ्जने हिता ।
चातुर्थिकमपस्मारमुन्मादञ्च नियच्छति ।। 17 ।।°

टीका :—सोंठ, मरिच, पीपर, हींग, सीधा°नमक, वच, कुटकी, शिरीष के बीज, करञ्ज के बीज व सफेद सरसों—इन्हें समभाग गोमूत्र से पीस कर वर्त्ति बनावें । इसके अञ्जन से चातुर्थिक ज्वर, अपस्मार और उन्माद रौग नष्ट होते हैं ।

'हरिद्रा[6]प्रभावती वर्त्तिः

हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ।
भद्रमुस्तकलिङ्गानि नागरं सैन्धवं वचा ।।

---

1 क. पंचं, ख. पंच 2 क. तिमिरां कृतं
°—° 'अथ प्रचेतना ...... नियच्छति', पाठोऽयं ख. पुस्तके नोपलभ्यते ।
3 यो. र. 'त्र्यूषणादिवर्त्तिः' इति नाम ।
4-4 क. हिङ्गुलं वर्णं 5 क. माजानां
° अस्मात् परं ख. पुस्तके
6 भा. प्र., यो. र. ग. नि. नागार्जुनी गुटिका नाम्ना, भा. प्र., यो. र. च चंद्रप्रभा-वर्त्तीति नाम्ना, तथा चक्र. हरिद्राऽऽद्यावर्त्तिः नाम्ना पाठान्तराणिः—

पाठा च चित्रकं कुष्ठमजामूत्रेण पेषयेत् ।
वटिकां चणकाकारां छायाशुष्कान्तु कारयेत् ।।

वारिणा तिमिरं हन्ति पटलं मधुसर्पिषा ।
पिच्चिटं तिलतैलेन काञ्जिकेन तु कामलाम् ।।

रात्र्यान्ध्यं भृङ्गराजेन स्त्रीक्षीरेण तु पुष्पकम् ।
°दद्यादजीर्णके चैकं । विषच्यां (विसूच्यां) द्वे ? (द्वौ) प्रदापयेत् ।।

तिस्रो मूषकदष्टे तु सर्पदष्टे तु सप्त वै ।
अष्टौ व्यन्तर दष्टे तु विषादेषु (?) चतुर्दश ।।

प्रभावती वटी ह्येषा महादेवेन निर्मिता ।।°

इति हरिद्राप्रभावतीवर्तिः'

---

'हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ।
भद्रमुस्तं बिडङ्गानि [1]सप्तमं विश्वभेषजम् ।।
[2]गोमूत्रेण गुडी कार्या छागमूत्रेण चाञ्जनम् ।[2]
[3] [4]ज्वरांश्च निखिलान् हन्ति भूतावेशं तथैव च ।।[4]
वारिणा तिमिरं हन्ति [5]मधुना पटलन्तथा[5] ।
[6]नक्तान्ध्यं भृङ्गराजेन[6] नारीक्षीरेण पुष्पकम् ।।
[7]शिशिरेण परिस्रावम[8]र्बुदं पिच्चिटन्तथा ।। (चक्र.)[7]

१ भै. र. सपमं　३ भै. र. मद्रुषं　२-२ अस्मिन्स्थाने भा. प्र., यो. र. च 'अजामूत्रेण सम्पिष्य च्छायायां शोषयेद्वटीम् ।' एतानि समभागानि वृ.वै. "सर्वाणि समभागानि गवां मूत्रेण पेषयेत्"; ग. नि. छागमूत्रेण पेषयेत् ।'
४-४ ग. नि. 'कोलास्थिका गुटी छायाशुष्का नागार्जुनीति सा ।।'
४-४ पाठोऽयं भा. प्र., यो. र. च नोपलभ्यते ।
५-५ भ. प्र., यो. र. च 'गोमूत्रेण तु पिष्टकम्' इति पाठः ।
६-६ भा. प्र., यो. र. च 'मधुना पटलं हन्ति' इति पाठः ।
७-७ पाठोऽयं भा. प्र., यो. र. च नोपलभ्यते । अस्मिन् स्थाने "एषा चन्द्रप्रभा वर्त्तिः स्वयं रुद्रेण निर्मिता ।" इति पाटः । ग. नि.

### अञ्जनार्थे अयोग्याः

श्रान्ते प्ररुदिते भीते पीतमद्ये नवज्वरे ।
[1]अजीर्णे वेगघाते च नाञ्जनं समुपाचरेत् ।। 18 ।।

टीका :—थके हुए, प्ररुदित, भयान्वित, मद्यपीत, नवज्वर के रोगी, अजीर्ण के रोगी व मलमूत्रादि वेगावरोधित रोगियों के लिये अञ्जन का प्रयोग निषिद्ध है ।

### अञ्जनप्रयोगसमयः

हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते ।
पूर्वाह्णे चापराह्णे च ग्रीष्मे शरदि चेष्यते ।। 19 ।।

[2]वर्षासु नाभ्रे नात्युष्णे वसन्ते च सदैव हि ।।

टीका :—हेमन्त व शिशिर में मध्याह्न, ग्रीष्म व शरद में पूर्वाह्न या अपराह्न में, वर्षा में जब बादल साफ हो व अत्युष्णता न हो तब, तथा वसंत में हर समय अंजन का प्रयोग किया जा सकता है।

इति श्रीपरमहंस-परिव्राजकाचार्य श्रीनृसिंहभारती-तत् शिष्य परमहंस-परिव्राजकाचार्य-श्रीआनन्दभारतीविरचितायां आनन्दमालायां
अञ्जनाधिकारः समाप्तः ।।
इति एकादशोऽधिकारः

---

'गवां मूत्रेण पिटिकां काञ्जिकेन च कामलाम् ।
उशीररससंयुक्ता विषं वृश्चिक-सम्भवन् ।।'

३-३ 'ज्वरांश्च निखिलान्·······पिच्चिटन्तथा,' पाठोऽयं वृ.वै. नोपलभ्यते; अस्मिन्स्थाने तत्र—

"कोलास्थिमात्रगुटिकां छायाशुष्कां प्रकल्पयेत् ।
वारिणा तिमिरं हन्ति मधुना पटलं तथा ।।
सिद्धाम्भसा च कण्डूञ्च स्त्रीस्तन्येन तु वेदनाम् ।।

०–० असम्बद्धोऽयं पाठः

1 क. उष्णे

2 क. वषाश्वनस्तेनत्युष्णे (?) ख. वर्षाश्चतश्रेनत्युंस्ने (?)

अथ द्वादशोऽधिकारः

# नस्याधिकारः

### भेदाः

प्रतिमर्शोऽवपीडश्च नस्यं प्रधमनं तथा ।
शिरोविरेचनं पञ्च नस्यभेदाः प्रकीर्तिताः ।। 1 ।।

टीका :—नस्यकर्म पांच प्रकार का है—(1) प्रतिमर्श, (2) अवपीड, (3) नस्य, (4) प्रधमन और (5) शिरोविरेचन ।

### नासिकया जलपानम्

विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति °पलचतुष्कं वारि नासापुटाभ्याम्° ।
स भवति चिर[1]जीवी चक्षुषा तार्क्ष्यतुल्यो
बलिपलितविहीनः स[2]र्वरोगैर्विमुक्तः ।। 2 ।।

टीका :—जो मनुष्य रात्रि के समाप्त होने पर प्रातःकाल उठकर नासिका-छिद्रों से चार पल जल पीता है वह चिरंजीवी हो जाता है । उसकी दृष्टि गरुड़ के समान दूरदर्शी हो जाती है व बलि व पलित (मुख में झुर्रियां पड़ना व असमय में बालों का पकना) से रहित हो सभी प्रकार के रोगों से मुक्त हो जाता है ।

### नस्यसेवनगुणाः

प्रसन्नदृष्टिर्दृ[3]ढदन्तकेशः
शशाङ्कवक्त्रः पलितैर्विहीनः ।
पि[4]कालिकण्ठः कमलास्यगन्धो
नस्योपसेवी भवतीह मर्त्यः ।। 3 ।।

---

°–° ग. नि. खलु नरो यो घ्राणरन्ध्रेण वारि

1 ग. नि. मतिपूर्णः 2 क. सर्वशीर्षरोगैर्विमुक्त ख. शीर्षरोगै विमुक्त

3 क. दृढदन्तशः, ख. दृढिदंतवोस 4 क. पिकामिषक्तं

टीका :—नस्यसेवनकर्ता मनुष्य की दृष्टि प्रसन्न, व दांत और केश दृढ हो जाते हैं। वह चन्द्रवदन हो जाता है व बलिपलित से मुक्त हो जाता है। उसका कण्ठ कोयल के समान मधुर व मुख की गन्ध कमल जैसी हो जाती है।

## लवङ्गादिनस्यम्

एकं लवङ्गकुसुमं यवद्वयं तु निस्तुषम्।
सिद्धा[1]र्थकत्रिभागस्तु चत्वारो धान्यकस्य च ॥ 4 ॥

हिङ्गुस्याद्य[2]वमात्रञ्च पिप्पली-मरिचद्वयम्।
सैन्धवेन समं योज्यं नस्यकर्मणि योजयेत् ॥ 5 ॥

शिर[3]आर्तौ वर्णशूले बाधिर्ये चापतन्त्रके।
मन्यास्तम्भे हनुस्तम्भे तथा चैवार्द्धभेदके ॥ 6 ॥

स्रावे च तिमिरे काचे नक्तान्धे पटला[4]र्बुदे।
लवङ्गाद्यमिदं नस्यमूर्ध्वजत्रुगदापहम् ॥ 7 ॥

टीका :—लवङ्ग टां 1, छोलियो जव टां 2, सरसव टां 3, धाणा टां 4, हींग[5] टां 2(?) (यव मात्र), पीपली टां 2, मरिच टां 2, सींधव टां 2, उसा सर्व वांटि छाणि नास दीजै। गुण—पाठ मांहेला रोग सर्व जाई।

---

1 क. सिद्धार्थकफलत्रीणि

2 क. साद्यमात्रं

3 क. शिरार्तौ 4 क. पटलांबुधैः।

5 हींग की मात्रा यवमात्र ही शास्त्रसम्मत है—तद्यथा—'हिङ्गुस्याद्यवमात्रन्तु....' शा., मा. प्र. तथा अत्रैव श्लोक 16

मधूकसारादिनस्यम्

मधू[1]कसारस्य मज्जा(?)सनस्य(?) (मधूकसारश्चिरजश्च मज्जा(?))
भस्मानि(?)कठो[2]पि(?)टङ्कणस्य(सनश्च भस्मीकृतटङ्कणञ्च(?))
[3]कटुत्रयं भागसमान्यमूनि[3]
भा[4]गश्चतुर्थांशमितो विषः[5] स्यात् ।। 8 ।।

विधाय चूर्णं तुलसीरसेन
स[6]म्पुट्य च द्वादशवारमेतत् ।
कफापहं पीनसमू[7]र्ध्वरोग—
विनाशनं नस्य[8]मृषिप्रादिष्टम् ।। 9 ।।

[9]सन्निपातहरणं वमनेन
सर्वभिषक्कथितो हि मधू[9] ? ।। 10 ।।

टीका :—किसी भी पाण्डुलिपि में इस योग की टीका नहीं मिलती । हमें उपलब्ध अन्य ग्रन्थों में भी यह योग नहीं मिला ।

इस योग की फलश्रुति में इसे कफ, पीनस व ऊर्ध्वजत्रुरोगनाशक बताया है । आगे कहा गया है कि इससे वमन होकर सन्निपात भी नष्ट हो जाता है । शाङ्र्गधर ऐसे रोगों में 'विरेचन नस्य' को हितकर बताते हैं, तद्यथा—

'ऊर्ध्वजत्रुगते रोगे कफजे स्वरसंक्षये ।
अरोचके प्रतिश्याये शिरः शूले च पीनसे ।।
शोफापस्मारकुष्ठेषु नस्यं वैरेचनं हितम् ।।'

यद्यपि पाठ भ्रष्टता के कारण निश्चितरूपेण इस योग के द्रव्यों के नाम

1 ख. मघुक 2 ख. कचोरपि 3-3 क. कटुश्यं भोग समान्यमूल
4 ख. भागाश्चतुर्धा शमितं 5 क. विषं
6 क. सङ्कुट्य 7 ख. मर्घरोग 8 ख. ० मृषिः प्रादष्टि
9-9 ख. पाठोऽयं नोपलभ्यते । क. ० सर्वसुभिषमयुक्तेन मधु ।
टि. योगोऽयं अन्यग्रन्थेषु नोपदृश्यते ।

बताना तो कठिन है किंतु मधूकसार (महुए की सुरा या रस), मज्जा, सन, टङ्कण, त्रिकटु विष ? (वचा?) व, तुलसीरस ये द्रव्य स्पष्टतः दिखते हैं।

अष्टाङ्ग हृदय में विरेचननस्य के द्रव्यों में स्नेह, आसव, लवण की गणना की गई है, तद्यथा—

'यथास्वं योगिकैः स्नेहैर्यथास्वं च प्रसाधितैः।
कल्कक्वाथादिभिश्चाद्यं मधुपट्वासवैरपि ॥'

शाङ्र्गधर का इसमें तीक्ष्णतैल, व तीक्ष्ण औषधियों से साधित स्नेह प्रयुक्त करने का आदेश है, तद्यथा—

'अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः।
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथैः रसैस्तथा ॥'

भावप्रकाश में भी मधूकसार को वैरेचन नस्यौषधि कहा गया है, तद्यथा---

'मधूकसारकृष्णाभ्यां वचा-मरिच-सैन्धवैः।'
''नस्यमणुतैलम्'' के द्रव्यों में तुलसी भी एक द्रव्य है।

शाङ्र्गधरोक्त 'मधूकसारादिनस्य' बेहोशीनाशक योग है जो इस पुस्तक वाले योग से नितान्त भिन्न है।

पिप्पली मरिचं लोध्रं शि[1]लाचेति चतुष्टयम्।
अर्द्धशीर्षव्यथां हन्ति वरिपिष्टन्तु नस्यतः ॥ 11 ॥

टीका :—जो मनुष्य पीपर, मरिच, लोध्र व मैणसिल इन चार द्रव्यों का समान भाग चूर्ण पानी से पीस कर नस्य लेता है उसकी आधाशीशी पीड़ा दूर हो जाती है।

---

1 क. शिलाजतु, अन्यग्रन्थेषु—

'नस्यं मनः शिला रोध्रं पिप्पली मरिचान्वितम्।
यः करोति हरेदेव तस्यार्द्धशिरसो व्यथाम् ॥'

इति पाठान्तरदर्शनात् 'शिलजतु' स्थाने ''मनः शिला'' (ग.नि.) (शिला) पाठ एव साधुः।

### प्रतिश्यायान्तकनस्यम्

पिप्पल्यः शिग्रुबीजानि बिडङ्गमरिचानि च ।
अवपीडः प्र[1]शस्तोऽयं प्रतिश्यायनिषूदनः ।। 12 ।।

टीका :—पीपर, सहोजने के बीज, बायबिडंग और मरिच। इनसे बना अवपीडन नस्य प्रतिश्याय दूर करने के लिये उत्तम है।

### अवबाहुके नस्यम्

रामठरुचकविमिश्रा[2] जंभि(?)[3] (कुंभी(?))निर्याससंयुता पिष्टा ।
वानरिजटा चिरो[4]त्थं नाशय[5]त्यवबाहुकं नस्यात् ।। 13 ।।

टीका :—हींग, व सौंचल के साथ गुग्गुल मिलावे य उनके साथ कौंचमूल पीस कर नस्य देने से जीर्ण अवबाहुक व्याधि नष्ट होती है।

### नस्यकर्मसमयः

कफपित्तानिलध्वंसि पूर्व-मध्याऽपराह्णके ।
दिनस्य गृह्यते नस्यं रात्रावप्युत्कटे गदे ।। 14 ।।

टीका :—यदि कफरोगों को नष्ट करना हो तो पूर्वाह्ण में पित्तनाश के लिये, मध्याह्ण में, तथा वातनाशार्थ अपराह्ण में नस्य देनी चाहिये। किंतु, यदि रोग भयङ्कर हो तो रात्रि में भी नस्य दी जा सकती है।

### नस्यायोग्याः

भु[6]क्ते पीते[7] प्रतिश्याये गर्भिण्यां दुर्बले ज्वरे ।
[8]तृषा-वेगावरोधे चा[8]ऽजीर्णे न तु समाचरेत् ।। 15 ।।

---

1 क. प्रशस्तस्य, ख. योगोऽयं नोपलभ्यते-पत्रलोपात् ।
2 क. ० मिश्री 3 कुंभिनिर्यास = गुग्गुलुः
4 क. चिरोछे 5 क. नश्यन्त्यववाहुकं
6 क. नक्ते 7 क. पीठे 8-8 क. तृष्णायामवराधूना

टीका :—भोजन कर चुकने के बाद, स्नेह, आसव, व जल पीने के पश्चात् प्रतिश्याय (नया जुकाम) ग्रसित रोगी को, गर्भवती को, दुर्बल को, ज्वरग्रसित रोगी को, तृष्णा से युक्त व मलमूत्रादिवेगावरोध किये व्यक्ति को व अजीर्ण के रोगी को नस्य नहीं देनी चाहिये ।

नस्यकर्मणि द्रव्याणां परिमाणम्

नस्यकर्मणि दातव्यं शाणैकं तीक्ष्ण[1]मौषधम् ।
हिङ्गु[2] स्याद्यवमात्रन्तु माषैकं सैन्धवं मतम् ।।

क्षीरञ्चैवाष्ट[3]शाणं स्यात् पानीयञ्च त्रिकार्षिकम्[3] ।
कार्षिकं म[4]धुरं द्रव्यं नस्यकर्मणि योजयेत् ।। 17 ।।

टीका :—नस्यकर्मार्थ औषधि की मात्रा 1 शाण, हींग की जौ भर, सीधे नमक की 1 माशा, दूध की 8 शाण, जल की 3 कर्ष व मधुरद्रव्य की मात्रा 1 कर्ष पर्यन्त लेनी चाहिये ।

इति श्रीपरमहंस-परिव्राजकाचार्य-श्रीनृसिंहभारती तत् शिष्य-आनन्दभारती-विरचितायां आनन्दमालायां नस्याधिकारः ।

इति द्वादशोऽधिकारः

---

1 क. सौषधम् 2 क. हिग्मूत्राद्यव

3-3 क. चैवाघृ(ष्ट)साएात्पानीयं चिवर्कर्षिकम् । 4 क. मघूरं

अथ त्रयोदशोऽधिकार:

# स्वेदाधिकारः

अथ भूनिम्बादिस्वेदा:[1]

भूनिम्बादी[2]ष्टिका-नाडी-लाक्षातुम्ब्यग्निवालुकाः ।
कृशरा[3]-धू[4]प-सूष्णाम्बु[4]स्वेदा एवं त्रयोदश[5] ।। 1 ।।

टीका :—इस श्लोक से, स्वेदों के प्रकारों की संख्या तेरह होनी प्रतीत होती है किन्तु इसमें केवल 9 ही प्रकार मिलते हैं। तद्यथा—(1) भूनिम्बादि (यह स्वेद प्रकार नहीं है, व एक स्वेदयोग है ।), (2) इष्टिका (3) नाडी, (4) लाक्षातुम्बी, (5) अग्नि, (6) वालुका, (7) कृशरा (8) धूप व (9) उष्णाम्बु । चरक में भी स्वेदभेदों की संख्या 13 ही कही गई है किन्तु वे इनसे नितान्त भिन्न हैं ।[6] इस प्रकरण में भूनिम्बादिस्वेद का 1 योग, इष्टिका, नाडी, लाक्षातुम्बी व अग्निस्वेद का 1-1 योग, वालुकास्वेद के 2 योग, कृशरा, व उष्णाम्बुस्वेद का 1-1 योग व धूपों के 4 योग हैं । इस प्रकार 13 योग हैं । धूपों को भी स्वेदों में ही गिना गया है ।

अस्वेद्या:

तृ[7]षार्तो दुर्बलोऽजीर्णी[8] पाण्डुर्मेही मदात्ययी ।
अतिसारी रक्तपित्ती गुर्विणी ता[9]न्न स्वेदयेत्[9] ।। 2 ।।

टीका :—तृषा से पीडित, दुर्बल, अजीर्ण के रोगी, पाण्डु व प्रमेह के रोगी,

---

1 क. स्वेदः 2 क. ० दाष्टका 3 क. कृष्णशरा 4 क. धूमपाम्मांबु
5 क. दशा
6 'संकरः प्रस्तरो नाडी परिषेकोऽवगाहनम् ।
जेन्तकोऽश्मघनः कर्षुः कुटी भूः कुम्भिकैव च ।।
कूपो होलाक इत्येते स्वेदयन्ति त्रयोदश ।।' च. सं.
7 क. तृष्णार्ता 8 क. जीर्णो 9-9 क. तेन सीदति

मदात्ययी, अतिसारी, रक्तपित्ती व गर्भिणी—ये स्वेद देने योग्य नहीं हैं।

०भूनिम्बाऽर्क-शिरीषपत्र-तरु[1]णी निःक्वाथ्य मूत्रेण च
शय्याऽधो निहितः सुतीव्रदहनः सन्तप्तलोष्ठोष्मणा ।
[2]नाशं गच्छति [3]सन्निपात उदित[3]स्तन्द्रातिनिद्राज्वरो
मूकत्वञ्च महाप्रलापनम[4]थो जाड्यादियुक्तं क्षणात् ।। 3 ।।०

टीका :—भूनिंब, अर्क, शिरीष के पत्ते, और तरुणी—इनका गोमूत्र से बना क्वाथ रोगी की शय्या के नीचे रखकर तीव्राग्नि दे व उसमें लोहे के गरम गोले डुबावें। ऐसा करने से जो वाष्प निकलती है उससे सन्निपातज ज्वर की तन्द्रा, अतिनिद्रा, प्रलाप, मूकत्व व शरीर की जड़ता क्षणभर में नष्ट हो जाती है।

अ[5]ग्निदग्धेष्टिका सिक्ता काञ्जिकेन पुनः पुनः ।
सवस्त्रा च तया स्वेदो रोगा[6]ञ्जयति वातजान् ।। 4 ।।

टीका :—ईंट को अग्निदग्ध करके कांजी में बारम्बार बुझावे व वस्त्र (कम्बल आदि) में डालकर स्वेद देवें। यह स्वेद वातरोगों को दूर करता है।

नाडी-स्वेदः

अनूपोदकमांसा[7]नि दशमूलं शतावरीम् ।
कुलत्थान् बद[8]रीं माषांस्तिलान्कृष्णान् वचां बलाम् ।। 5 ।।

---

०–० क. 'भूनिंवार्क्कसिरिपत्राणि क्वाथस्य मूत्रस्य तु
शय्यांधोहृति दहतस्य तीव्रदहनैः सन्तप्तलोष्टोष्म ।
नासं गछति सनिपातउदिततन्द्रातिनिद्राज्वरो
सूकत्वं च महाप्रलापदवज्जाड्यादिषुत्कर्षणात् ।।'

0-1 तरुणी—यह घृतकुमारी व दन्ती का पर्याय है।

0-2 तेषां 0-3-3 सन्निपातःनियतं 0-4 मपि च

5 क. अग्निदग्धोष्टका 6 क. रुजां

7 क. ० मांसान 8 क. वदिरान्

व[1]स्त्रे दध्यारनालाक्ते सह कुंभे विपाचयेत् ।[2]
नाडीस्वेदं प्रयुञ्जीत पिष्टैश्चवोपनाहनम् ।। 6 ।।

तैश्च सिद्धं घृतं तैलमभ्यङ्गं पानमेव च ।
आमवा[3]तादिकान्रोगान् सर्वान्वा[4]तान् व्यपोहति ।। 7 ।।

टीका :—अनूपदेश के जलचर जीवों का मांस, दशमूल, शतावर, कुलथी, वानरी व बदरी (कौंच के पर्याय है) शूकशिम्बी (?) उड़द, काले तिल, वचा व बला, इन्हें दही तथा काँजी में पीस कर वस्त्र में डाले व उस पोटली को दही व कांजी से भरे घड़े में पकावें । इन द्रव्यों से नाडीस्वेद देवें व इन्ही को पीस कर उपनाह करें । इन द्रव्यों से साधित घृत अथवा तैल के पान व अभ्यङ्ग से उग्र आमवातरोग व सभी वातरोग नष्ट होते हैं ।

लाक्षातुम्बीस्वेदः (?)

कुष्ठमेरण्डजं मूलं पौष्करं सुरदारु च ।
शतपुष्पां शठीं रास्नां मुण्डीं तेजवतीं तथा ।। 8 ।।

त्रिकटुं ग्रन्थिकं भार्गीं चाश्वगन्धां पुनर्नवाम् ।
एतैरर्द्धपलैर्भागैः लाक्षाढकस[5]मायुतैः ।। 9 ।।

अग्निना मूर्च्छितं (?) कृत्वा चूर्णं युक्त्या[6]ऽथ मेलयेत् ।
ततस्तु स्वेदयेद्धीमान् बाहु-पृ[7]ष्ठ-शिरोग्रहान् ।। 10 ।।

कटिग्रहं गृध्रसीं च स्वेद एष व्यपोहति ।।

(इति) लाक्षातुम्बीस्वेदः (?)

---

1 क. वासी 2 क. पाचये
3 क. आमवाताजिन्नोन् 4 क. सर्व्वेन
5 क. लाक्षाढिक
6 क. युक्तार्थं 7 क. पृष्टि

टीका :—कूठ, एरण्डबीज, पुष्करमूल, देवदारु, शतपुष्पा, नरकचूर, रास्ना, मुण्डी, तेजबस, सोंठ, मरिच, पीपर, पीपरामूल, भार्ङ्गी, असगंध व पुनर्नवा। ये सभो द्रव्य आधा आधा पल व लाक्षारस एक आढक (64 पल)। इन्हें अग्नियोग से स्वेदयोग्य बनालें। यह स्वेद बाहु, पृष्ठ, शिरोग्रह, कटिग्रह व गृध्रसी का नाश कर देता है।

### अग्निस्वेदः

छागलिण्ड्यग्निना स्वेदः कफवातरुजञ्जयेत् ।। 11 ।।

टीका :—बकरी की मैंगणियों को जलाकर 'अग्निस्वेद' देने से कफवात रोग नष्ट होते हैं।

### उष्णाम्बुस्वेदः

उष्णाम्भ[1]स्तिलतैलाभ्यां धा[2]रास्वेदोऽनिलाप[3]हः ।

टीका :—गरमपानी व तिलतैल मिलाकर दिया गया धारास्वेद वातनाशक होता है।

### बालुकास्वेदः

खर्परभृ[4]ष्टपटस्थितकाञ्जिकसि[5]क्तो हि वालुकास्वेदः ।। 12 ।।

शमयति वातकफामय-मस्तकशू[6]लं त्व[7]ङ्गभङ्गादीन् ।

टीका :—मिट्टी के खीपड़े में बालुका को गरम कर, उसे कपड़े की पोटली में बांध कर ऊपर कांजी छिडकें। उस वाष्प का स्वेद वातश्लेष्मजनित पीडा व अंगों के टूटने आदि विकारों को शमन करता है।

---

1 क. उष्णाम्भस्तिलतैलाभ्यां 2 क. धारान् 3 क. ० ग्रहः
4 क. ० भ्रष्ट 5 क. सेक्तो यो. र. संसिक्त 6 क. मस्तकश्रू 7 क. त्वाङ्ग, यो. र. शूलाङ्गभेदादीन् 7 ख. मस्तकसूल्वागभीगदात्

एवं पांसुजरेणु[1]तप्तमनुजः सौख्यं व्रजेत्सत्वरम् ।। 13 ।।

टीका :—इसी तरह अन्य मिट्टी की रेणु का स्वेद भी शीघ्रफलदायक होता हैं ।

इति वालुकास्वेदः

कृशरास्वेदः

प्रपुन्नाटसणैरण्ड-कार्पासफलमेथिकाः ।
यव-माष-तिलांश्चैव[2] तक्रे पांसुजसंयुताः ।। 14 ।।

स ए[3]ष कृशरास्वेदः सर्ववातान् व्यपोहति ।।

टीका :—चक्रमर्द, सण, एरण्ड, कपासफल, मेथी, यव, उड़द व तिल । इनका समभागचूर्ण तक्र में साध, कृश[4]रास्वेदविधि से स्वेद दें । यह कृशरा-स्वेद सारी वातव्याधियों को नष्ट करता है ।

इति कृश[5]रास्वेदः

---

1 क. रेहि, ख. रेह

2 क. तिलीश्चमिस्तक्र

3 क. एक 4 क. सिरस्वेदः, ख. सिरा स्वेद

5 कृशरास्वेदविधि : उक्त क्वाथ से एक ऐसे घड़े को भरें जिसके बगल में एक छिद्र हो । घड़े के मुख को सकोरे से मुद्रित कर दें । फिर 3 संधि वाली नली, जो मूल में 6 अंगुल चौड़ी हो व आगे क्रम से पतली हो व 2 हाथ लम्बी हो; उसे उस छिद्र में फिट करके मुद्रा लेप दे । फिर तैल से मालिश किये हुए व सुखपूर्वक बैठे रोगी को भारी वस्त्र ओढा कर, हाथी की सूंड के समान क्रम से पतली उक्त नाडी द्वारा स्वेद देवें ।

माहेश्वरो धूपः

हिङ्गु[1]लं देवकाष्ठ[1]ञ्च श्रीवेष्टं घृतमेव च ।
ग[2]वामस्थि तथा वा[2]लं निर्मा[3]ल्यं(?) कटुरोहिणी ।। 15 ।।

[१]सर्पपौ द्वौ बृहत्यौ च निम्बपत्राणि दापयेत् ।[१]
[२]के[4]शराहित्वचञ्चैव[4] कार्पासास्थि नखन्तथा ।। 16 ।।[२]

मार्जारविष्टां गोश्रृङ्गं[5] मदनस्य फ[6]लानि च ।
[३]छा[7]गलोमं-यवतुषा[7]न् मायूरं पक्षमेव च ।। 17 ।।[३]

[४]ग[8]जेन्द्राश्वनखान् विष्टां शूकरस्य च बुद्धिमान् ।[४]
[५]एतान् सङ्गृ[9]ह्य सम्भारं [10]वस्तमूत्रेण सेचयेत् ।। 18 ।।[५]

उलूख[11]लाहतंकृत्वा स्थाप[12]येन्मृद्भाजने ।[६]
[७]अनेन धू पयोगेन दह्यमानेन धूवेश्मनि ।। 19 ।।[७]

---

1-1 क. ख. हिङ्गवासवं देवदारु च, मै. र. हिङ्गुलं०

2-2 मै. र. गवास्थीनि तथाऽऽघ्यामं; क. गबामस्थि तथा बाला

3 क. नव्या कटुरोहिणी, ख. नव्या तकटुरोहणी मै.र. निर्माल्यं

१-१ मै.र. 'सर्षपनिम्बपत्राणि पिच्छाहिकंचुकं तथा ।'

4-4 ख. केसहित्ववं चैव

२-२ मै.र. 'द्वे बृहत्यौ वचा चैव कार्पासास्थि तुषास्तथा ।'

5 क. गोश्रृङ्गी 6 क. दलानि 7-7 क. छागलोमान्यवतुषं, ख. छागरोगानयवतुषं

३-३ मै.र. 'छागगोमायुविट चैव हस्तिदन्तस्तथैव च ।'

8 क. गजेन्द्रीश्व नखो ख. गजेन्द्राश्वनखो 9 क. संगृह्य 10 क. त्वत्स० ख. वत्स्य

४-४ 'गजेन्द्र··· बुद्धिमान् पाठोऽयं मै.र. नोपलभ्यते

५-५ अस्मिन्स्थाने मै.र. 'एतत्सर्वं समाहृत्य छागमूत्रेण भावयेत् इति पाठः

11 क. उदूखलहतं 12 क. स्थाप्य, ख. स्थापि

६ अस्मात् परं मै.र. "ॐ नमो भगवते रुद्राय, उमापतये सम्पन्नाय नन्दिकेश्वराय इति मन्त्रेणाभिमन्त्रयेत्" ।। इत्यधिकः पाठः

७-७ मै.र. घ्राणमात्रेण धूपोऽयं दीयते यत्र वेश्मनि ।

°तत्र नागा न तिष्ठन्ति न पिशाचा न[1] राक्षसाः[1] ।
न पू[2]तना ग्र[2]हाः केचिद् [3]डाकिन्यः समुपद्रवाः[3] ।। 20 ।।°

एष माहेश्वरो धूपः सर्वग्रह[4]विमोक्षणः ।
एकाहिकं दाहिकञ्च त्र्याहिकञ्च चतुर्थकम् ।। 21 ।।

°मासार्द्धमासकञ्चापि तथा वै मानसं ज्वरम्[5] ।
नाशयेत् सर्वभूतानां जूरांश्चैवाप्यशेषतः ।। 22 ।।°

इति माहेश्वरो धूपः ।

टीका :—हिंगुल, देवदारु, धूपसरल, घृत, गाय की अस्थि, सुगंधवाला, निर्माल्य, कटुरोहिणी (कटुकी) दोनों सरसों, दोनों प्रकार की कटेरियां, नीम के पत्ते, केशर, सांप की कंचुकी, कपास की अस्थि, नख, बिल्ली की विष्टा, गाय का सींग, मदनफल, बकरी के केश, यव, तुष, मोरपांख, हाथी व घोडे के नख, सूअर की विष्टा—इन सभी को सम भाग लेकर बकरे के मूत्र से भावना देकर ओखली में कूट लें ।

---

°–° 'तत्रनागा··· समुपद्रवाः', अस्मिन्स्थाने भै.र. "न तत्र सर्पास्तिष्ठन्ति न पिशाचा न राक्षसाः" इति पाठः

1-1 क. न च राक्षसान्　2-2 ख. पूनागृहा　3-3 ख. न केचित् मुद्रवा

4 क. ज्वरैः

5 भै. र.० ज्वर

°–° 'मासार्द्ध·······ज्वरांश्चैवाप्यशेषतः', अस्मिन् स्थाने भै.र. "एवमादीन् ज्वरान्सर्वान् नाशयेन्नात्र संशयः" इत्येव पाठः ।

पाठान्तरम्—वृ.यो.त., मा.प्र., टो. च.

'रुद्रजटा गोशृङ्गं बिडालविष्ठोरगस्य निर्मोकः ।
मदनफलं भूतकेशी वंशत्वग् रुद्रनिर्माल्यमृ ।।
घृत-यव-मयूरचन्द्रकच्छा[1]गरोमाणि सर्षपाः सवचाः ।
हिङ्गु गवास्थिमरीचाः समभागाश्छागमूत्रसम्पिष्टाः ।।
धूपनविधिना शमयन्त्येता[2]न् सर्वज्वरान्नियतम्[2] ।
ग्रहशा[3]किनीपिशाच-प्रे[4]तविकारानयं धूपः[4] ।।

१ टो. छागल　२-२ टो. शमयन्त्येते सर्वान् ज्वरान्　३ टो. डाकिनी

४-४ टो. पनोदनो धूपाः

इसे मिट्टी के बर्तन में सुरक्षित रख लें। इस धूप को घर में जलाने से नाग, पिशाच, राक्षस, पूतना, ग्रह आदि पलायन कर जाते हैं। डाकिनियों आदि के उपद्रव भी नष्ट हो जाते हैं। यह माहेश्वर नामक धूप सभी प्रकार की ग्रह बाधा हरता है। ऐकाहिक, दाहिक, तिजारी, चौथिया, मासिक, अर्द्धमासिक व मानसज्वर, इन सबका नाश करता है। प्राणियों के अन्य सभी ज्वर भी इसके प्रयोग से नष्ट हो जाते हैं।

अपराजित[1] धूपः

पल[2]ङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी।
सर्षपाः सयवाः स[3]पिर्धू[4]पनं ज्वरनाशनम्[4] ।। 23 ।।

टीका :—गूगल, नीम के पत्ते, बच, कूठ, हरड, सरसों जौ और घृत—इन्हें समभाग मिलाकर ज्वरनाशार्थ धूप करना चाहिये।

---

पाठान्तरम् वृ. वै.

'श्रीवेष्टदारुवाल्हीकं मुस्ता कटुकरोहिणी।
सर्षपो निम्बपत्राणि मदनस्य फलानि च ।।
बृहत्यौ सर्पनिर्मोक-कार्पासास्थियवास्तुषः।
गोश्रृङ्ग-खुररोमाणि बर्हिपिच्छं बिडालविट् ।।
छागरोमघृतं चेति बस्तमूत्रेण भावयेत्।
एष माहेश्वरो धूपः सर्वग्रहनिवारणः ।।' 75-77

1 चक्र., यो.र., टो., र.र, भै.र. च 'अष्टाङ्गधूपः' इति नाम

2 क. पलकस्या, ख. पुरके (पुरः गुग्गुलुः) निम्बपत्राणि

3 टो. हिङ्गु 4-4 अ. हृ. धूपो बिड्वा बिडालजा

### का[1]र्पासास्थिधूपः

कार्पासास्थिमयूरपुच्छ[2]बृ°हतीनिर्माल्यपिण्डी[3]तकै°—
स्त्व[4]ग्मांसी[5]वृषदंशविट्तुषवचाकेशाहिनिर्मोककैः[5] ।
नागेन्द्रद्विजशृङ्ग[6]-हिङ्गुमरिचैस्तुल्यं कृतं धूपनं
स्कन्दोन्मादपिशाचराक्षससुरावेश[7]ग्रहघ्नः स्मृतः[7] ।। 24 ।।

टीका :—कार्पासबीज, मोरपंख, बडी कटेरी, शिवनिर्माल्य, मदनफल, दालचीनी (या खश), वंशलोचन, बिल्ली का मल, धान की भूसी, बच, भूतकेशी, सर्पकञ्चुकी, गाय का सींग, हाथी का दांत, हींग तथा कालीमिरच—इन सबको समभाग लेकर उसका धूप देने से स्कन्दापस्मार,उन्माद, पिशाच, राक्षस, देवावेश व ज्वर शान्त होते हैं ।

### राजार्ह-सुगन्धधूपः

[8]शशिरविसुरकामा तन्मितादर्शिनीच[8]
मलयजगिरिलोहं [9]दिग्ग्रहोसिल्हकञ्च[9] ।
नख-जल-घन-केशी तत्प्रमाणं च पूर्वं
कमलज-घृत[10]-धूपः सर्वभूतान्निहन्ति[11] ।। 25 ।।°

---

1 यो.र., अ.हृ. च 'माहेश्वरो धूपः' इति नाम

2 अ.हृ. 'पत्र', टो. "पक्ष",3 क. पिंडांतकः °–° ख. बिरहटी माहेसकौ निर्मान्यतगरु । पिंडातेक । 4 चक्र. त्वग्वांशी (त्वग्वांशीति) त्वग् = उशीरम्, वांशी = वंशलोचनाः अन्ये तु त्वग् = दालचीनी, मांसी = जटामांसी इत्याहुः (अ.हृ., यो.र., टो.) 4-5-5 ख. 'त्वामांसी, क. विषदंशविंड्रूववचाकेसो निर्मोचकै ।' ख. 'विषदंसविड्रूष च केसोहि निर्मोचके ।

6 ख. शृङ्गु 7-7 क, वेसंग्रहध्रूपरं; ख. वेश्मगृहघ्नं परम् ।

8-8 क. रविशशि सुरकामकं दर्पणी च । ख. सूर 9-9 क. दिग्रहे सिलहकं च ख. दिगृहं 10 क कृत, ख कत 11 क. भूतानि हंति, ख. भूतानुहंति

° पद्यमेतन्महदशुद्धम् । अतोऽत्रास्य सार एव शब्दैः ग्राह्यः ।

टीका :—कूंकूंकेश[1]नि टां 16, कपूर टां 12, [2]कस्तूरी टां 13, चन्दन टां 7, अगर टां 10, सिलारस टां 9, नख ठां 16, वालौ[2] (सुगंधवाला) टां 12, मोथ टां 13, छड़ टां 7 (कमल की दंडी टां 10 व घृत टां 9 ?) [3]राजार्ह सुगन्धधूप ।

इति स्वे[4]दाधिकार:/इति त्रयोदशोऽधिकार

1 ख. केसरि 2-2 क. कस्तूरी से सुगंधवाला तक के छः द्रव्य क. में नहीं हैं ।
3 ख. 'इति राजहंसा सुगंध धूप । इति स्वैदाधिकारो 4 क.० मेदाधिकार:

अथ चतुर्दशोऽधिकारः

# स्नेह-बस्ति-कल्पना

## स्नेहाधिकारः

घृतम्पुष्टिकरं पानान्मद्यपानाद्ध[1]तौजसाम् ।
केवलं पैत्ति[2]के सर्पिर्वातिके लवणान्वितम् ।। 1 ।।

पेयं बहुकफ[3]व्या[4]धौ व्योषक्षारसमन्वि[5]तम् ।

टीका :—मद्यपान से जिसके ओज का क्षय हो गया हो उसे घी पीने से पुष्टि प्राप्त होती है । पित्तरोगों में केवल घृतपान, वातज रोगों में नमक-मिश्रित घृत का पान व कफरोगों में घी को त्रिकटु व क्षार मिला-कर पीना चाहिये ।

°शीतकाले दिवास्नेहमुष्णकाले पिबेन्निशि° ।। 2 ।।

सर्दियों में दिन में व गर्मियों में रात में घृतपान करना चाहिये ।

वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा ।

टीका :—वातपित्ताधिक रोगों में रात में किन्तु वातकफाधिक रोगों में दिन में घृतपान करना चाहिये ।

### अनुपानानि

घृते कोष्णजलं पेयं तैले यूषः प्रशस्यते ।
वसामज्ज्ञोः पिबेन्मण्डमनुपानं सुखावहम् ।। 3 ।।

---

1 ख. मद्यपानद्विर्तौजसः 2 ख. 'पैत्रकं सर्पं पर्वातिकेवलवणान्वितं ।'
3 क. ख. कफे 4 सुश्रु. सं. वह्नि 5 ख. समंनितं
°–° "शीतकाले पिबेन्निशि" इत्यपूर्णः पाठः ।

पलद्वयं त्वनिलजे पित्तजे तु पलत्रयम् ।
अनुपानं प्रयोक्तव्यं व्या[1]धौ तु कफजे पलम्[1] ।। 4 ।।

टीका :—घृतपान के पश्चात् अनुपान में किञ्चिदुष्णजल व तैलपान के बाद यूष हितकर है । वसा तथा मज्जा पान के पश्चात् मांड पिलाना सुखकर होता है ।

वातव्याधि में अनुपान की मात्रा 2 पल, पित्तव्याधि में तीन पल व कफव्याधि में एक पल होती है ।

*

### वस्तिकल्पना

°बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ।। 5 ।।

संसर्गे सन्निपाते च वस्तिरेव हितः सदा ।

टीका :—वात, पित्त, कफ, रक्त, दोषों के संसर्ग (प्रकोप) तथा सन्निपात (त्रिदोषज संसर्ग) इनमें बस्तिप्रयोग ही सर्वदा हितकर होता है ।°

---

1-1 ख. व्याधौरुज कफे जले

* अब 'इति घृतपानविधि' इति पाठः ख. पुस्तके दृश्यते ।

° यह श्लोक सुश्रुत सं. से उद्धत है । (चि. अ. 53) चरक ने जिनकी शाखाओं में कुपित हुआ वायु सञ्चार करता है उनमें विशेषतः वस्तिकर्म को प्रशस्त कहा है; तद्यथा—

'येषां च शाखासु चरन्ति वाताः
शास्तो विशेषेण हि तेषु बस्तिः ।।'
च. च. सि, 1/38

वायु के अत्यन्त प्रवृद्ध होने पर, उसकी शान्ति के लिये बस्ति के सिवाय कोई अन्य औषधि नहीं है । अतः कतिपय विद्वान् इसे 'आधी चिकित्सा' मानते हैं तो अन्य इसे ही 'सम्पूर्ण चिकित्सा' कहते हैं, तद्यथा—

"तस्माच्चिकित्सार्धमितिब्रुवन्ति
सर्वां चिकित्सामपि बस्तिमेके" ।। 1/39

## शिरोबस्तिविधानम्

¹आशिरो व्या[1]यतं चर्म्म[1] षो[2]डशाङ्गुलमुच्छ्रितम्[2] ।। 6 ।।

तेनाऽऽवेष्ट्य शिरोऽधस्तान् माषकल्केन लेपयेत् ।¹
²निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत् ।। 7 ।।²

धारयेदारुजः शा[3]न्तेर्यामं यामार्द्धमेव वा ।
³शिरोबस्तिर्जयत्येष[4] शिरोरोगं मरुद्भवम् ।। 8 ।।³

हनु-मन्याऽक्षिक[5]र्णार्त्तिमर्दितं मू[6]र्द्धकम्पनम् ।।

टीका :—शिर के समान लम्बाई वाला तथा सोलह अंगुल चौड़ा (ऊंचा) चमड़े का टोपी जैसा पट्टा शिर पर लपेटना चाहिये । चमड़े के लपेट की संधियों में नीचे भाग में उड़द की पीठी का लेप करना चाहिये । इसके बाद रोगी को सीधा बैठाकर गुनगुने तैल से, उक्त चर्मनिर्मित वृत्त (टोपी) के मध्य भाग को, भर देना चाहिये । जब तक पीड़ा शान्त न हो जाय तब तक उसे $1\frac{1}{2}$ से 3 घंटे तक रखे रहना चाहिये । इस शिरोबस्ति से वात के कोप से उत्पन्न शिरो रोग, हनु, मन्या, आंख और कान की पीड़ा नष्ट होती हैं व अर्दित रोग व शिरः कम्प भी नष्ट होते हैं ।

---

1-1 यो.र. व्यापि तच्चर्म, ग.नि., मा.प्र., चक्र च 'चर्म' 2-2 भै.र., चक्र., वृ.वै.च 'कत्वाऽष्टाङ्गुल० र. र. कृत्वाष्टांगुलिमुद्रितम् क.० मूर्छितं

१-१ 'आशिरो···· लेपयेत्' पाठोऽयं वृ,यो.त. नोपलभ्यते ।

२-२ 'निश्चलस्योपविष्टस्य·······प्रपूरयेत्', अस्मात् परं वृ.यो. त. "शिरोबस्ति शिरः पीडापरीतस्य नरस्य हि" । इत्यधिक पाठः ।

३-३ 'शिरोबस्ति ·······मरुद्भवम्', पाठोऽयं र. र. नोपलभ्यते ।

3 क. ० रुजं दृश्यते 4 क. ० ह्येष शिरिरोग

5 क. ० कटिगार्ति 6 क. मूद्धिनकंपितं, वृ. वै. शीर्षकंपनं; चक्र. मस्तकंपनम्

### तैलपूरणे कालनियमः

तैलेनाऽऽपूर्य मूर्द्धानं [1]पञ्चमात्राशतानि[1] च ।। 9 ।।

तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दशवाते शिरोगदे ।
एवमेव विधिः कार्यस्तथा कर्णाक्षिपूरणे ।। 10 ।।

टीका :-- शिरोबस्ति में तैल को पूरण करने के बाद शिरोरोग में 500 मात्रा, पित्तज में 800 मात्रा तथा वातज शिरोरोग में 1000 मात्रा उच्चारण काल तक उसे धारण करना चाहिये । कान तथा आंख के पूरण में भी यही नियम समझना चाहिये ।

इति शिरोबस्तिः

### उत्तरबस्तिः

चर्मणः कस्य धातोर्वा च[2]क्षु-कर्णि-युतोत्तरः ।
बस्तिर्द्वि[3]हस्तमानोच्चै[4]रिष्टः स्वासनवेशिनः[5] ।। 11 ।।

टीका :—उत्तरबस्ति चर्म की व किसी धातु से बने नेत्र व कर्णिकायुत होती है । रोगी को दो[6] हाथ ऊंचे आसन पर बिठा कर यह बस्ति दी जाती है ।

कोष्णेन तिलतैलेन पूरितो रोगनु[7]त्तु तत् ।(?)
[8]यामयामार्द्धमानं वा तत्तैलेन प्रतिष्ठते (?) [8]।। 12 ।।

---

1-1 क. न च मात्रा शताधिका । वृ.यो.त., ग.नि., चक्र. च. 'पञ्चमात्राशतानि च' इति पाठः एष एव पाठस्साधुः ।

2 क. चनुः कौण मत्तोत्तरः ?
शा. 'अतः परं प्रवक्ष्यामि बस्तिमुत्तरसंज्ञितम् ।
द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकम् ।।' (शा., भा.प्र. वृ.यो.त. च)

3 शा. "स्थितस्य जाजुमात्रे च पीठेऽन्विष्य शलाकया" 4 क.० चैर्दष्टं

5 क. विस्तृतः

6 शाङ्र्गधरादि ग्रंथों में रोगी को जानुपर्यन्त ऊंचे आसन पर बिठाने का आदेश है ।

7 क. रोगलं नु 8-8 अप्रासङ्गिकोऽयम्पाठः कालमानाभावात् ।

टीका :—मामूली गरम तिल तैल से पूरित यह रोगों का हरण करती है। इसे एक याम या आधे याम पर्यन्त तैल से प्रतिष्ठित रखें (?)

सेकाभ्य[1]ङ्गावगाहेषु तिलतैलं प्रशस्यते ।
तैलावगाहनं वातशमनं बलपुष्टिदम् ।। 13 ।।

टीका :—सेक, अभ्यङ्ग व स्नानार्थ तिल तैल प्रशस्त है। तैलावगाहन वात-शामक व बल-पुष्टिप्रद है।

धातून्वर्द्धयते तत्तु क्रमेण बस्तिसेवनात् ।।

टीका :—क्रमेण बस्तिसेवन करने से धातुओं की वृद्धि होती है ?

(इति) उत्तरबस्तिः

रक्तस्राव वर्णनम्

एकतस्तु क्रिया सर्वा रक्तमोक्षणमेकतः ।। 14 ।।

टीका :—सारी अन्य क्रियाएं एक तरफ हैं तो अन्य एक ओर केवल रक्त-मोक्षण क्रिया है।

रक्तं हि विक्रियां याति [2]तन्मोक्षे नास्ति चान्यरुक्[2] ।

टीका :—क्योंकि रक्त ही बिगड़ कर रोगों को उत्पन्न करता है। अतः युक्ति-युक्त मात्रा में उसे निकाल देने पर अन्य रोग नहीं होते हैं।

वातरक्ते तथा[3] कुष्ठे सपीडे दुर्जये[3]ऽनिले ।। 15 ।।

पा[4]ण्डिरोगे श्लीपदे[5] च विषदुष्टे च शोणिते ।
ग्र[6]न्थ्यर्बुदापचीक्षुद्ररोगरक्ताधिमन्थके[6] ।। 16 ।।

---

1 क. सैकाभ्यावगाहेषु
2-2 क. तच्चूर्नास्ति न चाति रुक्
3-3 क. ० तथाष्टेसपीडदुर्क्रंयए
4 क. पादिरोगो 5 क. श्रीपदेव 6-6 क. गंथ्यबुंदापत्रीक्षुत्ररोगरक्ताधिमस्तिषु

विदारीस्तनरोगेषु गात्रसादे[1]ऽतिगौरवे ।
रक्ता[2]भिष्यन्दतन्द्रायां पूतिघ्राणस्य देहिनः[2] ।। 17 ।।

यकृ[3]त्प्लीहविसर्पेषु विद्रधौ[4] पिडकोद्गमे ।
[5]कर्णोष्ठघ्राणवक्त्राणां पाके दाहे शिरोरुजि[5] ।। 10 ।।

उपदंशे रक्तपित्ते रक्तस्रावः प्रशस्यते ।

टीका :—वातरक्त, कुष्ठ, पीडासहितदुर्जय वातव्याधि, बाहुरोग, (हाथों में दाह आदि पाणि रोग) श्लीपद, विषदुष्टरक्त ग्रन्थि, अर्बुद, अपची, क्षुद्ररोग, रक्ताधिमन्थ, विदारी, स्तनरोग, गात्रसाद व गात्रगौरव, रक्ताभिष्यन्द, तन्द्रा, नाक के सड़ने व दुर्गन्धित होने, मुख व देह से दुर्गन्ध, यकृत्, प्लीहा, विसर्प, विद्रधि, फोड़े निकलने (पीडिका, बालतोड़), कर्ण-होठ-नासिका व मुख के पाकों में, या उनकी जलन में, शिरोरोगों, उपदंश, व रक्तपित्त, इन रोगों में रक्तस्राव कराना चाहिये ।

मदमूर्च्छाश्रमातानां वातविण्मूत्रसङ्गिनाम् ।। 19 ।।

[6]निद्राऽभिभूत भीतानां[6] नृ[7]णां नासृक् प्रवर्तते ।

टीका :—मद, मूर्च्छा व श्रम के रोगियों एवं मलमूत्रावरोध से पीडित, निद्राभिभूत व भीत रोगियों का रक्तमोक्षण भलीभांति निष्पन्न नहीं हो पाता है ।

त्वग्दोषा[8] ग्रन्थयः शोफा[9] रोगाः शोणितसम्भवाः ।। 20 ।।

---

1 क. गात्रसादांगगौरवे 2-2 क. रक्तोभिष्यंदि तंद्राणां घटिघ्राणेषु देहिनां
3 क. वतिशोथ 4 क. विद्रधो 5 क. कंठोष्टघ्राणवदन सोदाहे सितोरुजे
6 वातनिद्राभिभूतानां 7 क. नृण
8 क. ० दोषे 9 क. शोफ

रक्तमोक्षणशीला[1]नां न भवन्ति कदाचन ।

टीका :—चर्मदोष, ग्रन्थियां, शोफ व रक्त से सम्बन्धित रोग, ये रक्तमोक्षण करवाने वालों के कदापि नहीं होते हैं ।

व्यभ्रे वर्षासु विध्येत ग्रीष्मकाले तु शीतले ।। 21 ।।

हेमन्तकाले मध्याह्ने शस्त्रकालास्त्रयो मताः ।

टीका :—रक्तमोक्षण (शस्त्र काल) तीन हैं । (1) वर्षा ऋतु में जब मेघों से आकाश आच्छन्न न हो, (2) ग्रीष्म ऋतु में जब ठंडक हो और हेमन्त ऋतु का मध्याह्न काल ।

यवा[2]गूं प्रतिपीतस्य शोणितं स्रावयेद्भिषक् ।। 22 ।।

टीका :—वैद्य को चाहिये कि वह यवागू पिये हुए रोगी का ही रक्त निकालें ।

शृङ्गी वातोद्भवे रोगे पित्रजे तु जलौकसः[3] ।
तुम्बी कफोद्भवेरक्तं त्रिदोषे शोषयेच्छिरा ।। 23 ।।

टीका :—वातजरोगों में शृङ्गी, पित्तज रोगों में जोंक, कफजरोगों में तुम्बी व त्रिदोषज रोगों के निवारणार्थ शिरा से रक्त खींचना चाहिये ।

तुम्ब्यष्टाङ्गुलमात्रेण व्य[4]स्तमात्रेण शृङ्गिका ।
जलौका हस्तमात्रेण शि[5]रासर्वाङ्गशोधिनी ।। 24 ।।

टीका :—तुम्बी आठ अंगुल तक का रक्त खींचती है, शृङ्गी तर्जनी से अङ्गुष्ठ तक लम्बे स्थान तक का व जौंक 1 हाथ तक के स्थान का रक्त खींचते हैं व शिरा सर्वाङ्गशोधिनी है ।

---

1 क. सिलानां
2 क. यवागू
3 क. जलौकसां
4 क विस्ति 5 क. शीरः श०

जलौकाश्रृङ्गचथादत्ते[1] हंस: क्षीरं यथोदकात् ।
कौसुम्भमादौ पीताभंस्रवेद्रक्तं शिरादिजम् ।। 25 ।।

टीका :—जिस प्रकार हंस जलमिश्रित दूध में से केवल दूध-दूध ही ग्रहण करता है उसी प्रकार जलौका व शृङ्गी भी केवल दूषित रक्त को ही निकालते हैं। शिराओं से जो रक्त निकलता है वह पहले तो कौसुम्भरंग का होता है व बाद में पीले रंग का।

लाघवं वेदनाशान्तिर्व्याधेर्वेगपरिक्षय: ।
सम्यग् विस्राविते लिङ्गं प्रसादो मनसस्तथा ।। 26 ।।

टीका :—भली भांति रक्तस्राव हो जाने पर शरीर हल्का हो जाता है। वेदना की शान्ति, व्याधि का नाश व मन की प्रसन्नता ये लक्षण सम्यग् विस्रावित के होते हैं।

पृथिव्या[2]दिक भूतानां रक्ते गन्धादयो गुणा:[2] ।°
तस्मा[3]द्रक्तस्य गन्धेन[4] भु[5]वि मूर्च्छन्ति मानवा:[5] ।। 27 ।।

टीका :—पृथ्वी आदि पञ्चमहाभूतों के गन्धादिगुण रक्त में हैं अत: उसकी गन्ध से मनुष्य मूर्च्छित हो जाते हैं।

शीतलान्यन्नपानानि प्रभाते[6] मैथुनं त्यजेत् ।
त्रिदिनं रक्तमोक्षार्थी[7] स्ना[8]नं क्रोधं श्रमं तथा ।। 28 ।।

टीका :—शीतल, अन्न व पान, प्रभात में मैथुन, स्नान, क्रोध व श्रम, इन्हें रक्तमोक्षार्थी तीन दिन तक न करें।

---

1 क. दते

° सुश्रुत सं. 'विस्रता द्रवता रागश्चलनं विलयस्तथा ।
भूम्यादिपञ्चभूतानामेते रक्ते गुणा: स्मृता: ।।'

2-2 क. पृथिव्यांभस्तमो रूप: गंधं रूपं च तन्मयम् । 3 क. तन्माद्
4 क. गंधेन 5-5 क. भुवि मूर्च्छाति
6 क. प्रमात 7 क. मोक्षार्थी 8 क. स्नानां

इति श्रीपरमहंस-परिव्राजकाचार्य-श्रीनृसिंहभारथी-तत् शिष्य-परमहंस-परिव्राजकाचार्य-श्रीआनन्दभारती विरचितायां आनन्दमालायां रक्तमोक्षाधिकारः समा[1]प्तः ।। श्री ।।

"संवत् 1853 शाके 1718 प्रवर्त्तमाने मासोत्तममासे असाढमाने पंचम्यां तिथौ शनिवासरे लिप्यक्ृतं स्वेतांबरधर्म्म-घोषासूराणगछे मथेनपंडित श्री 108 श्रीईन्द्रभांणजी तत्पुत्र शिवचन्द नग्र हरसोर मध्ये ।। पं. श्रीशिवचन्द--तत्पुत्र-चिरंजीव मेघराज झुथरमल सुषजी वाचनार्थं ।।

शुभं भवतुः कल्याणमस्तु ।।"

याद[2]शम्पुस्तकं दृष्टं[2] तादृशं लि[3]खितम्मया ।
अतः शुद्धमशुद्धं वा मम दोषो न विद्य[4]ते ।।

श्री श्री श्री श्री श्री

इति चतुर्दशोऽधिकारः

---

1 क. समाप्ताः

2-2 क. यादृशं संपुस्तकं दृष्ट्वा 3 क. लिखते मया 4 क. दीयते

अथ पञ्चदशोऽधिकारः

# धातूपधातुशोधन-मारणाधिकारः[1]

धातवः

स्वर्णतारस्य (स्वर्णतारार-) ताम्राणि नागवङ्गौ च तीक्ष्णकम् ।
धातवः सप्त विज्ञेयास्ततस्तान् साधयेद् बुधः ।। 1 ।।

उपधातवः

माक्षिकं तुत्थकाभ्रौ च नीलाञ्जन-शिलाऽऽलकाः ।
रसकश्चेति विज्ञेया एते सप्तोपधातवः ।। 2 ।।

स्वर्णादिधातूनां समासतः शुद्धिः

स्वर्णतारंच(स्वर्णतारार-)ताम्राणि(ताम्राय) पत्राण्यग्नौ प्रतापयेत् ।
विषिचयेत्(निषिञ्चेत्)सप्तानि(तप्ततप्तानि)तैले तक्रे च काञ्जिके
।। 3 ।।

गोमूत्रेण(गोमूत्रे च) कुलत्थानां कषाये च त्रिधा त्रिधा ।
एवं स्वर्णादिलोहानां विशुद्धि(विशुद्धिः) सम्प्रजायते ।। 4 ।।

नागवङ्गौ प्रतप्तौ च गालितो (गालितौ) तौ निषेचये (येत्) ।
त्रिधा त्रिधा विशुद्धिः स्याद्रविक्षीरेण च त्रिधा ।। 5 ।।

शिलागन्धार्कदुग्धाक्ताः स्वर्णाद्याः सप्तधातवः ।
मृयन्ते (म्रियन्ते) द्वादशपुटैः सत्यं गुरुवचो यथा ।। 6 ।।

धातूपधातवः सर्वे मृता आयुःकरास्तथा ।
त्व(अ-)पक्वा धातवो रोगान् कुष्ठादीञ्जनयन्त्यपि ।। 7 ।।

---

1 अधिकारोऽयं नैवाऽस्ति क. ग्रन्थे 2 शा. शोधयेद्

### स्वर्णभेदाः

प्राकृतं सहजं वह्निसम्भवं खनिसम्भवम् ।
रसेन्द्रवेधसञ्जातं स्वर्णं पञ्चविधं स्मृतम् ।। 8 ।।

### मारणयोग्यसुवर्णस्य लक्षणम्

दाहे रक्तं कषे पीते (पीतं) छेदं (छेदे) कुङ्कुमसन्निभम् ।
ताडेन (ताडने) सुकुमारञ्च स्वर्णं स्यात्तद्रसायने ।। 9 ।।

### शोधनम्

सुवर्णं रेतवत्कुर्यात् (त्कृत्वा) मृत्पात्रे धारयेद् बुधः ।
कुमारीरसयोगेन टङ्कणेनाथ मर्दयेत् ।। 10 ।।

तेनैव रुष्ण (रुक्म-) मालोक्य (मालोड्य) वह्नियोगेन शोषयेत् ।
ततः शुद्धं भवे-टु (द्रु) क्मं सर्वभेषजकर्मणि ।। 11 ।।

### मारणम्

सौवर्णं रेतवद् भूयः (सुवर्णं रेतवत्कृत्वा) काञ्चनाररसप्लुतम् ।
गुञ्जकातैलयोगेन पुटे दद्यात्तथा त्वपि ? (ऽनले) ।। 12 ।।

कवच्यां स्थापयेद्धीमा-न्न(न-)धो वह्निं प्रदापयेत् ।
पङ्किलं जायते स्वर्णं यामद्वितयमात्रतः ।। 13 ।।[1]

---

1 उपर्युक्तरीत्या न तु स्वर्णशुद्धिर्नैव च स्वर्णभस्म भवति । अतोऽस्माभिरत्र ग्रन्थान्तररीत्या केचित् काञ्चनाररसप्लुतस्वर्णभस्मविधयो निर्दिशिताः । तद्यथा—

शुद्धं हेमं श्लक्ष्णपत्रीकृतं तद्
　　वारं वारं सूतगन्धानुलिप्तम् ।
तीव्रे वह्नौ काञ्चनारे हलिन्या—
　　ज्वालामुख्यां सम्पुटे भस्म कुर्यात् ।।' (र. का. धे.)

(टि. हलिनी = कलिहारी)

"शुद्धस्वर्णभवं चूर्णं तत्समं श्वेतमल्लकम् ।
काञ्चनारद्रवैर्मर्द्यं तुलसीस्वरसैस्तथा ।।

स्वर्णभस्मगुणाः

कान्तीर्विधत्ते हरते च रोगान्,
करोति सौख्यं प्रबलेन्द्रियत्वम् ।
शुक्रस्य वृद्धि बलतेजसी च
आयुः प्रदाता (आयुष्प्रदं वै) भवतेव (भवतीह) हेम ।। 14 ।।

अशुद्धस्वर्णस्य दोषाः

बलञ्च वीर्यं हरते नराणां
रुजागणं पोषयते हि का[1]यम् ।
असौख्यकारी (कृत्सं-) भवतेव (भवतीह) हेम,
अयातो ? (अपक्वकं)वै मरणं दरथदाति ? (ददाति)।। 15 ।।

(मारित-सुवर्णस्थगुणाः)

सुवर्णे (सुवर्णं) शीतलं वृष्यं वल्यं गुरु रसायनम् ।
कान्तिकार (कान्तिकर्तृ) विषोन्माद-त्रिदोषज्वरशोषजित् ।। 16 ।।

इति स्वर्णमारणम्

---

विधाय चक्रिकां शुष्कां ततो लघुपुटे पचेत् ।
द्वितीयादौ पुटे देयं मल्लं पादमितं बुधैः ।।
अरुणाभं भवेद्भस्म हेम्नस्तु दशभिः पुटैः ।।"
रसामृ., सि. यो. सं. च

"काञ्चनाररसैर्घृष्ट्वा समसूतकगन्धयोः ।
कज्जल्या हेमपत्राणि लेपयेत्सममात्रया ।।
काञ्चनारत्वचः कल्को मूषायुग्मं प्रकल्पयेत् ।
धृत्वा तत्सम्पुटे गोलं मृण्मूषासम्पुटे च तत् ।।
निधाय संधिरोधञ्च कृत्वा संशोष्य गोमयैः ।
वह्नि खरतरं कुर्यादेवं दद्यात्पुटत्रयम् ।।
निरुत्थं जायते भस्म सर्वकार्येषु योजयेत् ।।"
(टिप्पणमिद 312 पृष्ठनिरन्तरम्)
शा. प्र., शा. च

1 कायम = नितान्तम

(रजतशोधनमारणम्)

रजतस्यापि पत्राणि कुर्वादातारतः? (कुर्यादादरतः) पुरा ।
स्नुहीक्षीरेण सम्मर्द्य सोमलं लेपयेत्सुधीः ।। 1 ।।

कवच्यां स्वेदयेद्वह्नौ याममात्रं प्रयत्नतः ।।

रजतं रेतवत्कृत्वा युक्तमंगुलग्धैंकैः ? (युक्तं हिङ्गुलगन्धकैः)।
पूर्ववद्वह्नियोगेन भस्मीभवति तत्क्षणात् ।। 2 ।।[1]

रौप्यभस्मगुणाः

तारञ्च तारयति गङ्गमपारमध्ये ? (रोगसमुद्रपारं)
देहस्य सौख्यं (सौख्यदमिदं) कुरुते बलञ्च ।
पलितं प्रणाशयति कामस्य करोति वृद्धि ?
(पालित्यनाशनमिदं कुरुते च कामं)
मायुश्च वर्द्धयति सेवनवारसोपि ? (सेवनतत्परस्य) ।। 3 ।।

(अशुद्धरौप्यस्य दोषाः)

तारञ्च देहस्य करोति तापं
त्रि-(वि-)र्वद्धितं क्षनि ? (यच्छति) शुक्रनाशम् ।
अपाटवं चैव नस्य ? (तनोश्च) हारि
महागदं मोषयते ? (पोषयती-) त्वशुद्धम् ।। 4 ।।

रौप्यगुणा

रूप्यं शीतं सस्वातश्च (कषायञ्च) पित्तहारि रसायनम् ।
कान्तिदं शुक्रदं नृृणां बलीपलितनाशनम् ।। 5 ।।

इति रूप्यमारणम्

1 रजतमारणस्यैषा प्रक्रिया सन्दिग्धा । अनया तत्क्षणाद् भस्मनैव भवति । (स. रा.)

## ताम्रमारणम्

### शोधनम्

अर्क-सेहुण्डया(जै)दुंग्धैस्ताम्रपा(प-) त्राणि शोधयेत् ।
अकोठसिंग-? (अङ्कोठ-शिग्रु-)मूलाभ्यामग्नौ ताम्रं सीतं ? (सितं ?) भवेत् ।। 1 ।।[1]

वरारोहस्य सौ मारौ ग्वारिके रसगंधकं ?
सान पत्रा कवचीजंत्र मारइ प्रहर 4 अग्नि 4 । अथ गंधक ?

[2]कौमारीरसलिह्यन् लेपयेत् ?
(कौमारीरससम्पिष्टं ताम्रं गन्धेन लेपयेत् ? )।
कवच्यां स्थापयेद्धीमानधो वह्निं प्रदापयेत् ।। 2 ।।

ताम्रमृतिर्भवेदेवं चतुर्यामाग्नियोगतः ।। 3 ।।

### द्विविधं ताम्रम्

श्लोक्षं ? (म्लेच्छं)नैपालकं ताम्रं तथा ? (तत्र)नैपालमुत्तमम् ।
मिष्ट ? (म्लेच्छ-) ताम्रं भवेद्शुद्धं ? (द्रूक्ष-) अशुध ? (मसितं) कटुकं ? (कठिनं) तथा ।। 4 ।।[2]

न विषं विषमित्याहुस्ताम्रमेव महंद्वष ? (महद्विषम्) ।
विषो[3]यमेकदोषः स्यात् शुल्वं चाष्टगुणं मतम् ।। 5 ।।

शुकतुण्डं किंशुका[4]भं छेदे रक्तं तथैव च ।

### विशिष्टशुद्धिः

---

1 श्लोकोऽयं ख. पुस्तके नोपलभ्यते

2-2 इदं सार्धश्लोकद्वयं घ पुस्तके नोदृघतम् । (सम्पा.)

3 घ. विषे यदेक

4 घ. शुकामक्षे

[1]अशिल ? (अम्लि)काया रसे वल्ला एकविंशति(तिकैः)पुटैः[1] ।। 6 ।।

ध्रुवं कालिका ? (मा-) रहिते (रहितं) ताम्रपत्रं (ताम्रं) भवति सत्वरम् ।

मारणविधिः

ताम्रं च रेतवत्कृत्वा ष[2]र्पट (खर्परे) ज्वालयेद् बुधः ।। 7 ।।

पुनर्नवारसेनाथ पञ्च दद्यात्पुटानि तु ।
एवं ताम्र (ताम्रं) भवेच्छुद्धं रसायनकरं परम् ।। 8 ।।

[3]गन्धके-(कें)° गुलकाभ्याञ्च[3] शुल्वपत्राणि लेपयेत् ।
[4]अज्या-(अजा-) दुग्धाग्नियोगेन[4] तम्रभस्मि ? (ताम्रभस्म) कलिं[5] भवेत् ।। 9 ।।

वान्ति भ्रान्ति क्लमं रेचं न करोति कदाचन ।।

(ताम्रभस्मगुणाः)

वह्निञ्च दीपयति नाशयते च कुष्ठ
मर्शांसि पाण्डुनि च शोफसु दुस्तरांश्च ?।
(पाण्डुनिचयानथ शोफरोगान्?) ।
अन्यांश्च दुस्तरगदामपि (मपि) कायजातं (जातान्)
ताम्रं सि-(स) दा (हरति) सेवनया नस्य (नरस्य) ।। 10 ।।

---

1-1 घ. मृदुरा स्निग्धतापे भवति तत्कध्यं बहुल्येण ?

2 घ. षर्पटे   3-3 ख. गन्धकै गोलकाभां   4-4 घ. दुग्धानि योगासां ?

5 ख. किलिं

° इङ्गुलं = हिङ्गुलं

(अशुद्धताम्रदोषाः)

शुल्वञ्च शोषयति देहजसप्तधातून्,

पुष्णाति रोगान्हरते च कान्तिम् ।

विशेषतः कुष्ठरुजां करोति,

पाकेन हीनं हरते तदायुः ।। 11 ।।

वातं ? (वान्ति ?) विरेकं कुरुते नराणां,

मूर्च्छा(मूर्च्छां) विधते(त्ते) हरेते(हरते) च शुक्रम्

नानारुजानां सहजं च कर्ता ? (कर्तृ)

अ(ह्य-)शुद्धशुल्वे(ल्वं) पि च (किल) जीवहारी ।। 12 ।।

(मारितताम्रस्य गुणाः)

ताम्रं रसं ?(सरं) लघु स्वादु शीतं पित्तकफापहम् ।

रोपणं पाण्डु-कुष्ठार्श-श्वासं श्वयथुकासजित् ।। 13 ।।

(यशदमारणम्)

[1]यशदं रेतवत्कृत्वा गोमूत्रेण च कल्कितम् ।

उदयास्तमनं ? (उदयास्तंरवे)र्यावत् ततः शुद्धं भवेद् भृशम् ।। 1 ।।[1]

सीसस्य शुद्धिः

[2]सीसकञ्च तथा कृत्वा वोग्द्रूम ? (वरोद्गम)रसः(रसैः)पुटान्[2] ।

दद्यादष्टाम्लयोगेन क्षालयेत्तत् प्रयत्नतः ।। 1 ।।

मारणम्

नागपत्राणि कुर्वीत पलत्रितयमात्रतः ।

त्रिफलां सैन्धवं [3]शुष्कां ? (मुक्त्वा ? )कवच्यां ज्वालयेद्भिषक्[3] ।।2।।

[4]नागस्य सिद्धिरेतस्मात् नान्यस्मात् सिद्धिरिष्यते[4] ।।

---

1-1 पाठोऽयं ख. पुस्तके नोपलभ्यते ।

2-2 'कृत्वां वीरकणवीरद्रुमरसः पुटाना' इति ख. पुस्तके पाठः

3-3 घ. 'मुष्का चकज्वरनयेद्भिषक्' ?

4-4 घ. 'नागस्य सिद्धिरेनस्मानस्मात्सिद्धिरिष्यते ।'

(नागभस्मविधिरपर:)

[1]शिलया रविदुग्धेन नागपत्राणि लेपयेत् ।
मारयेत्पुटयोगेन निरुत्थं जायते ततः ।। 3 ।।[1]

नागभस्मगुणा:

नागश्च नागशतमेव (तुल्य-) बलं करोति,
व्याधिञ्च नाशयति चाशु बलिं (बलं) करोति ।
प्रधानधातोरपि वर्द्धन: स्याद्-
भुजङ्गराजो हरते च मृत्युम् ।। 4 ।।

पाकहीन-नागवङ्गदोषा:

पाकेनहीनौ लघु नागवङ्गौ
[2]कुष्ठौदरारशेहहुलमकाकौ ?[2]
(कुष्ठोदराशींसि च गुल्मकारकौ ?)।
[3]विषोपमौ बाधयत्तौ ? च पात्रं ? (बाधयतश्च वह्नि)[3]
आपाक(मपाक)सिधौ ? (सिद्धौ ?) विततश्च ? (तनुतौ च)
दाहम् ।। 5 ।।

सीसकगुणा:

सीसं रङ्गगुणं गे ? (ज्ञे-)यं विशेषान्मेहनाशनम् ।। 6 ।।

सीसकदोषशान्तिः

पाठायुक्तं पिबेन्मूलं कारवेल्ली(कारवेल्ल्या)जव[4]स्तथा(यवस्य च)।
नागदोषं शमं याति पारदस्याप्यशंसय (सयम्) ।। 6 ।।

---

1-1 श्लोकोऽयं घ. पुस्तके नोपलभ्यते ।
2-2 घ. 'कृत्ष्मोदराशेहिद्गुल्मकारकैः ?'.
3-3 घ. 'विषोपमो वाधपनौ च पातं ?'
4 घ. भव

इति जसद(यशद) शोशा(सीसक-) मारण(मारणम्) ।।

## पित्तलमारणम्

पित्तलं रेतवत् क-(कृ-)त्वा गुञ्जापर्णरसमुर्हुः ।
सप्तः ?(तप्तं)कृत्वा पुटं दत्वा तत(ततः)सुवं(शुद्धं)च पित्तलम् ।।1।।

पिष्टो गन्धार्क(गन्धोऽर्क-)दुग्धेन तेन लेप्यं च पित्तलम् ।
ततो [1]भूया(मूषा-)पुटे दत्वा[1] पचेहुज ? (पचेद्रज-)पुटेन तत (तत्) ।। 2 ।।

एवं पुटत्रयेणैव भस्मारं भवति ध्रुवम् ।। 3 ।।

## पित्तलभस्मगुणाः

सुरीतिरेवं च शुभप्रदा स्यात्
प्रधानधातु[2]र्वल ? (धातोर्नव ?) यौवनायाः[2] ।
मांससि (स्य) वृद्धि कुरुते नराणां
प्रोत्साहनं कायबलं करोति ।। 4 ।।

निहन्ति मृत्युं ध[3]न ?(हत ?) एव सिद्धो[4]
वपु (पो-) र्दृढत्वं कुरुते च रूपम् ।
रुजापहर्ता बलवीर्यकर्ता
रसायने कर्मणि श्रेष्ठ उक्तः[5] ।। 5 ।।

## पित्तलगुणाः

पि[6]त्तलो (लं) हि हिमं रूक्षं कटूष्णं कफवातनुत् ।
कासश्वासज्वरं हन्यात् योगवाहि रसायनम् ।। 6 ।।

इति पित्तलमारणम्

---

1-1 घ. भूपः पूटे घृत्वा
2-2 घ. खल पोचनाचः ?'
3 घ. घना 4 घ. सिद्धेः 5 घ. 'युक्ताः'
6 घ. पीत्तलोह

भूनागताम्रविधिः

ग-[1](गं-)डूपदाख्यानादाय [2]सर्षोशुष्यस्तथा ? परान्[2] ।
(सर्वे शोष्यास्ततः परम् ।)
[3]तन्मध्यां मृत्यका ? (तन्मध्यमृत्तिकां)सर्वामुद्धरेद् बहुयत्नतः[3] ।। 1 ।।

घटं सछिद्र(द्रं) तत्पूर्णं समुद्र (द्रं) तं निधापयेत् ।
चुल्यां तदुपरि शनै अग्निं प्रज्वालयेत्सुधा (सुधीः) ।। 2 ।।

[4]तद्रुतिः नु (तद्द्रुतिं तु ?) समादाय टङ्कणेन युतं धमेत्[4] ।
अनेनैव विधानेन नागताम्रं शुभं भवेत् ।। 3 ।।

[5]तत्स्थं पटं वह्निनैव(नापि) न[6] प्रज्वालयति ? (प्रज्वलति) सत्वरम् ।
ज्ञेयं सुसिद्धं तत् [7]सर्वैः दृष्ट्वान्तु[7] प्रत्ययो महान् ? ।।
(दृश्यते प्रत्ययो महान् ?) ।। 4 ।।°

इति नागताम्रम्

---

1 गंड ० 2-2 घ 'तषा सुष्यास्तथा परान्'
3-3 घ 'तन्मध्यमृत्यसर्वां च मुद्धरेत् षल यत्नतः'
4-4 घ. 'तद्रुतिः त्तुं समायादायः टंकणेन पुध्रमेत् ।'
5 घ. तत्संपुटं 6 घ. त्त 7 ल. सैव इष्टा ते
° असंभाव्योयं योगः । अतोत्र तन्त्रान्तरोक्ता विधयो निदर्श्यन्ते —(सम्पा.)
'वर्षासु वृष्टिसंक्लिन्ने भूगर्भे सम्भवन्ति हि ।
जन्तवः क्रिमिरूपा ये ते भूनागा इति स्मृताः ।।
चतुर्विधास्तु भूनागाः स्वर्णादिखनिसंभवाः ।
स्वर्णादिभूमिसम्भूताः दुर्लभास्ते प्रकीर्तिताः ।।
ताम्रभूमिभवाः प्रायः सुलभाः गुणवत्तराः ।
ताम्रभूमवभूनागान् गृहीत्वा यत्नतः पुमान् ।।
गुडगुग्गुललाक्षोर्णा-मत्स्यपिण्याक-टङ्कणैः ।
दृढमेतेश्च संयोज्य मर्दयित्वा धमेत्सुखम् ।।
मुञ्चन्ति ताम्रवत् सत्त्वं तद्वत्पक्षाः सुबर्हिणाम् ।।'
वृ.यो.त., र.रा.सुं. च

(वङ्ग-शोधन-मारणम्)

शोधनम्

अथ वङ्गरसं क(कृ-)त्वा भृङ्गराजरसैः पुटान् ।
अष्टौ दद्यात्प्रयत्नेन वङ्गशुद्धिर्भवेत्ततः ।। 1 ।।

---

"गुग्गुलं टङ्कणं लाक्षा मज्जा सर्जरसं पुनः ।
ऊर्णा-गुञ्जा-क्षेत्रमीनमस्थीनि शशकस्य च ।।
गुडमध्वाज्यपिण्याकं तुत्थं पेष्यमजाजलैः ।
सर्वंतुल्यं च धान्याभ्रं भूनागमृत्तिकापि वा ।।
मेलयेन्माहिषैः पञ्चदध्यादिगोमयान्तिकैः ।
दृढं मर्द्यं वटीं कुर्यात् कर्षमात्रन्तु शोषयेत ।।
गोष्ठीयन्त्रे धमेद्गाढमङ्गारैश्च चिरोद्भवैः ।
त्रिवारं धूमनादेवं सत्त्वं पतति निर्मलम् ।।
असाध्यान्मोचयेत् सत्वान मृत्तिकादेश्च का कथा ।।"

(र. र.)

'भस्त्राद्वयेन हठतो ध्मातव्यं पञ्चमाहिषसुबद्धम् ।
दत्त्वा दशांशस्वर्जिकपटुटङ्कणगुञ्जिकाक्षारान् ।।
तद् गच्छति कठिनत्वं मुञ्चति सत्त्वं स्फुलिङ्गकाकारम् ।
मुक्तानिकरप्रायं ग्राह्यं तत्काचमधिवर्ज्यं ।।
...... ..........

वज्राभ्रकान्त-सस्यक-माक्षिकप्रमृतिसकलधातूनाम् ।
पातयति सत्त्वमेषां पिण्डी ध्माता दृढाङ्गारैः ।'

र. हृ. तं.

"ऊर्णा-टङ्कण-गुड-पुर-लाक्षा-सर्जरसैः सर्वधातुभिः पिष्टैः ।
छागीक्षीरेण कृता पिण्डी शस्ता हि सत्त्वविधौ ।।"

र. हृ. तं,

'चूर्णितसत्त्वसमानं त्रिंशत्पलमादरेण सङ्गृह्य ।
टङ्कणपलसप्तयुतं गुञ्जापलत्रितय-योजितं चैव ।।
तिलचूर्णकिट्टपलैर्मत्स्यैरालोडय द्विरंश युक्तैश्च ।
गोधूमबद्धपिण्डी गोपञ्चकभाविता बहुशः ।।
कोष्ठकधमनविधिना तीव्रं भस्त्रानलेन तत्पतति ।
सन्द्रवति चाभ्रसत्त्वं तथैव सर्वाणि सत्त्वानि ।।'

तत्रैव

भस्मविधिः

क(कृ-)त्वा वङ्गस्य पत्राणि कर्पटेन तु धारयेत् ।
चिञ्चाश्व[1]त्थ(त्थौ)रजोर्द्धार्द्ध ? (तथोर्द्धधः ?) र्वस्त्राणि ? (तेनैव)
परिवेष्टयेत् ।। 2 ।।

मृत्युका-(मृत्तिका-)लेपनं पश्चात्परितो यत्नतः सुधीः ।
वह्नि(वह्नौ) गजपुटे दत्त्वा ततस्तस्मात्समुद्धरेत् ।। 3 ।।

भस्मीभवति तत्सर्वं शङ्खचूर्णनिभं भवेत् ।।

अन्यविधिः

दूर्वारसेनावलिप्ते (लिप्तं) लोहपात्रेऽथवा क्षिपेत् ।
लोह-दार्व्या (दर्व्या) द्रवं वङ्गं च-(चा-)लितं भस्मतां गतम् ।। 4 ।।

तृतीयविधिः

कारोषद्वयमध्ये च वङ्गापत्राणि धारयेत् ।
वह्नौ गजपुटं दद्याद्भस्मीभवति वङ्गकम् ।। 5 ।।

चतुर्थविधिः

पलाशद्रवयोगेन वङ्गपत्राणि लेपयेत् ।
तालेन पुटितं पश्चान्म्रियते नात्र संशयः ।। 6 ।।

वङ्गगुणाः

आयु (आयुः) प्रदाता बलवीर्यकर्त्ता
रा (रो-) गापहर्ता मदनस्य कर्ता ।
वङ्गः समानो नहि किंच्य ? (कश्चि-) द[2]न्यो
रसायने कर्मणि श्रेष्ठ उक्तः ।। 7 ।।

---

1 घ. चिंचाश्वत्थरयो द्वै
2 घ. ० दस्ति

वङ्‌गं लघु शरं (सरं) रूक्षमुष्णं मेहकफ-क्रमात् (क्रिमीन्) ।
हन्ति पाण्डुं महाश्वासं दृश्य ? (दृष्ट ?) मीषत्तु पित्तलम् ।। 8 ।।

वङ्गदोषशान्तिः

वङ्गदोषप्रशान्त्यर्थं सरपुंखा-ह्नि ? (दि ?) भक्षणम् ।। 9 ।।

इति रांग (रङ्ग-) मारणम् ।

(लोहमारणम्)

शुद्धिः

लोहं च रेतवत्कृत्वा तिदू ? (तिन्दु-) वल्कलजैः रसैः ।
पुटे ? (पुट-) द्वादशमात्रेण कवची ? (कवच्यां) वह्नियोगतः ।। 1 ।।

सर्वं रसाञ्जनं ? (रसायने) जोज्यं (योज्यं) लोहे (लोहं) सुधं (शुद्धं) च धीमताः (धीमता) ।

(अन्यविधिः)

सारं च रेतव (वत्) कुर्यात् टंकणद्रावयोगतः ।। 2 ।।

[1]सौवीरेण ततः कुर्यात् प्रक्षालनमतन्द्रितः ।

(मारणम्)

आयसं रेतवत्कृत्वा क्षालयेदमयारसैः ।। 3 ।।

पुटैर्जम्बीरनीरेण शोषयेदातपे मुहुः ।
जम्बुवल्कलनीरैर्वा अ (ह्य-) र्जुनस्यापि वा रसे (रसैः) ।। 4 ।।

○ [2]हिंस्राजटारसैर्वापि सारं सञ्जायते तथा (तदा) ।○
पङ्किलं जायते लोहं वह्नियोगेन शोषयेत् ।। 5 ।।

---

1 सौवीरेण = काञ्जिकेन

2 हिंस्रा = जटामांसी

○—○ घ. हिंस्राजटारसैर्वापि सारसं प्रायते तथा ।

निर्गुण्डीरसयोगेन पञ्चाशत्पुटमात्रतः ।
सोभन ? (शोभनं) या(जा)यते दिव्यं सर्वभेषज्यकर्मणि ।। 6 ।।

लोहः सिन्दूरमेवं स्यात् प्रयोगे दुर्लभो नृणाम् ।

अन्य मारणविधिः

शुद्धमायस-खङ्गेन (खड्गस्तु) गन्धपारदयोः (कौ) तथा ।। 7 ।।

वानरीं च जटायुक्तां मर्दयेद्वि[1]धिपूर्वकम् ।
असि (असे) सम्यक् लेपेन ? (सम्यक्प्रलेपेन) सूर्यसन्मुख ?
(सूर्यसम्मुखतां) तापयेत् ? (नयेत्) ।। 8 ।।

द्रवन्ति (द्रवते) सहसा खड्गः सत्यं गुरुवचो यथा ।
पेषयेच्च पुनस्तानि पश्चात्मारयेत्सुधीः ? ।। 9 ।।

(लोहमारणविधिस्तृतीयः)

सत्यो न (नु)भूतो योगेन्द्रैः क्रमोऽन्यो लोहमारणे ।
कथ्यते रामराजेन कौतूहलधियाऽधुना ।। 10 ।।

शुद्धस्य रसराजस्य भागो भागद्वयं बलेः ।
द्वयोः समं सारचूर्णं मर्दयेत्कन्यकाम्बुना ।। 11 ।।

यामद्वयं ततो खल्वं (गोलं) स्थापयेत्ताम्रभाजने ।
आच्छाद्यै रण्डजैः पत्रैरुष्णो यामद्वयाद्भवेत् ।। 12 ।।

त्रिदिनं धान्यराशिस्थं तत्ततो मर्दयेद् दृढम् ।
रजस्तद्वस्त्रगलितं जले तरति हंसवत् ।। 13 ।।

(सर्वलोहमारकगणः)

छिलहिण्टीमृता (छिलहिण्ट्यमृता-) हिंस्राजटाऽर्कक्षीरकन्यकाः ।
घ्नन्त्याशु सर्वलोहानि गगनस्यैव का कथा ।। 14 ।।

---

1 विधिपूर्वकम्—विधिरत्र न प्रदर्शिता । असेर्द्रवत्वं अनयारीत्याः कमं सम्भवतीत्यपि विचारणीयम् । (सम्पा.)

(लोहभस्मगुणाः)

आमवातहरणे (हरणो) ऽतिशोफहा
पाण्डुमेहरुचि ? (गर ?) नाशनोऽगदः ।
दुष्टकुष्ठवलिपलितनाशनं (न-)
श्चायसोऽपि ज्वरमृत्युघातकः ॥ 15 ॥

(अशुद्धलोहदोषाः)

आयुप्र[1]हारी (आयुष्प्रहारी) गदकारकोऽयं
यदाप्यशुद्धो भवते ? किलायसः ।
करोति कायस्य अपाटवं च
हृदि प्रपीडां जनयेच्च दारुणाम् ॥ 16 ॥

(लोहस्य गुणाः)

लोहं केश्यं गुरु स्वादु कषायं कफपित्तनुत् ।
शीतं नेत्रहितं रूक्षं बलदं वातलं सरम् ॥ 17 ॥

शोफकुष्ठप्रमेहार्शः गरपाण्डुक्रिमीञ्जयेत् ॥ 18 ॥

(अपथ्यानि)

कूष्माण्डं तिलतैलं च माषान्नं राजिकां तथा ।
मद्यमशल(-मम्ल-)रसं चैव त्यजेल्लोहस्य सेवकः ॥ 19 ॥

इति सार-लोह-मारणम्

(मण्डूरशोधन-मारणम्)

पुरातनं समादाय किट्टं लोहसमुद्भवम् ।
अक्षा (अथां ?) गारैर्धमेद्वह्नौ विभीतकसमुद्भवैः ॥ 1 ॥

---

1 घ. आयुर्विहारी

काष्ठपात्रे गवांमूत्रपूर्णे तत्सप्तधा क्षिपेत् ।
चूर्णयित्वा तथाऽऽलोड्य त्रिफलायाः कषायकैः ।। 2 ।।

गोमूत्रेण पुनः सिक्तं युक्त्या गजपुटे पचेत् ।
तत उध्दृत्य तच्चूर्णं मण्डूरं सिद्धमादिशेत् ।। 3 ।।

अथ लोहमलं शुद्धं कृत्वा काञ्जिककल्कितम् ।
क्षालयेद्वारिणा धीमांस्तथा वै शोधयेद् बुधः ।। 4 ।।

(मण्डूरगुणं)

यत्किट्टं तद्गुणं ज्ञेयं विशेषात्पाण्डुनाशनम् ।
सारे यद्वर्जितं प्रोक्तं तत्किट्टेऽपि सदा बुधैः ।। 5 ।।

इति किट्टमण्डूरमारणम्

(माक्षिकशोधनमारणम्)

माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।
मातुलुङ्गद्रवैर्वाऽथ जम्बीरोत्थद्रवैः पचेत् ।। 1 ।।

चालयेल्लोहजे पात्रे यावत्पात्रं सुलोहितम् ।
भवेत्ततस्तु संशुद्धि स्वर्णमाक्षिक मिछति (मृच्छति) ।। 2 ।।

पुनः

स्वर्णमाक्षिकचूर्णन्तु सम्पुट्याम्लद्रवैर्दिनम् ।
तत एरण्डतैलं तु (तैलात्तु) द्रक्तं (रक्तं) गजपुटे भवेत् ।। 3 ।।

(रौप्यमाक्षिकशोधनम्)

कर्कोटकी मेषशृङ्गीद्रवैर्जम्बीरजैर्दिनम् ।
भावयेदातपेद्रौप्यमाक्षिकं शुद्धति ध्रुवम् ।। 4 ।।

(माक्षिकगुणाः)

हरेद्वमिं चोग्रमनेकरूपं तथा च मृत्युं हरते च माक्षिकम् ।
रोगांश्च नाशयति (वै) प्रवलं च हृद्यं
मन्दाग्निहानि वृणिविष्टन्तनेत्ररुक् ।।
([1]मर्शांसि मेहमरुचिं क्षयकामलांश्च ?) ।। 5 ।।

(अशुद्धमाक्षिकदोषाः)

मन्दाग्निं बलहानिं च व्रणविष्टम्भनेत्ररुक् ।
कुरुते माक्षिकं मृत्युमशुद्धं नात्र संशयः ।। 6 ।।

(माक्षिकगुणाः)

माक्षिकं तुवरं वृष्यं स्त्रयं लघु रसायनम् ।
चाक्षुष्यं कुष्ठशोफार्शो-मेहवस्त्यर्तिपाण्डुताम् (हृत्)।। 7 ।।
व्यवायं(यि) कटुकं हन्ति रक्तोदरविषक्षयान् ।।

इति माक्षिकमारणम्

"इति श्रीयोगशास्त्रे योगज्ञाने ग्रानंदसिधिकृते
श्ववर्णरूप्यमाक्षिकसोधनमारणम्"

(तुत्थशोधनम्)

तुत्थकं काञ्जिकेनाग्नौ भावये-च्छुद्ध(च्छुद्धि)मिच्छति(मृच्छति) ।
पुटैर्दग्ध (पुटं दध्ना) पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ।। 1 ।।

शुद्धतुत्थस्य गुणा

तुत्थकं लेखनं भेदि कण्डूकुष्ठविषापहम् ।
कफक्रमिहरं तद्वद् अन्य ? (वाम्यं) चाक्षुष्यमुत्तमम् ।। 2 ।।

इति तुत्थकशोधनम्

---

1 चि. पा. पाठोऽयं लभ्यते

(अभ्रकशोधनामारणम्)

अभ्रकजातयः

श्वेतं पीतं तथा कृष्णमभ्रकं त्रिविधं पुनः ।
पिनाकं नागकं भेकं वज्रं जात्या चतुर्विधम् ।। 1 ।।

आद्यत्रयमशुद्धं स्याद्वज्राकारं तदुत्तमम् ।
पिण्याकदलवदग्नौ (पिनाकं दलवच्चाग्नौ) लक्षयेदभ्रकं पुनः ।। 2 ।।

उच्चै-म(र्म)ण्डूक-वप्रागो ? (वद्भेकं) नागं फूत्कारवत्तथा ।
कृष्णाभ्रं वज्रवज्जातं श्रेष्ठमेवं पुनर्धमात् ।। 3 ।।

(शोधनम्)

कृष्णाभ्रकं धमेदग्ना वाति ? (वाज ?) क्षीरे विनिक्षिपेत् ।
भिन्नपत्रं च तत्कृत्वा तन्तु-(त[1]ण्डु-)लीयाम्लजैर्द्रवैः ।। 4 ।।

भावयेदष्टयामं च एवं(ह्येवं) शुधिति(शुद्धयति) चाभ्रकम् ।

(मारणम्)

धान्याभ्रकं समादाय कषा[2]यैश्च विशोधयेत् ।। 5 ।।

ततो मद्यं द्रव्यैरेषां शुष्कं गजपुटे पचेत् ।
कौमारी रविदुग्धं च जम्बूत्वक् बदरी जया ।। 6 ।।

[3]हरडै आमलौ रावरारोह ?[3] (हरीतक्यामलक्यक्ष-वटाङ्कुर-कषायकैः)।

जयन्ती दाडिमीपत्रं जम्बीरस्वरसं तथा ।। 7 ।।

---

1 तण्डुलीयो मेघनादः—'चौलाई' इति लोके

2 अभ्रशोधने: –वज्राभ्रकं वह्नितप्तं निक्षिपेत्सप्तसप्तधा ।
गोदुग्धे त्रिफलाक्वाथ्ये काञ्जिके सुरभीजले ।।
शुद्धिमायाति मलतः प्रक्षिप्तं वा त्रिधा त्रिधा ।।' (र.रा.सु.)

3-3 पाठोऽयं घ. पुस्तते नोपलभ्यते ।

एतैर्विमर्दयेदभ्रं प्रत्येकं च त्रिधा त्रिधा ।
एवं श[1]तपुटैः सिद्धो ?(सिद्धं) निश्चन्द्रो (न्द्रं) जायते ध्रुवम् ।। 8 ।।

अभ्रं मरिचक्षौद्रा[2]भ्यामकैकंन (मेकैकेन ?) तु मारयेत् ।
तन्निश्चन्द्र (न्द्रं) भवेन्नू[3]नं र[4]सायनकरं परम्[4] ।। 9।।°

द्वितीयविधिः

[5]बहुछिद्रमयं पात्रं कृत्वा चुल्यां निधापयेत् ।
पुनर्नवारसैः पश्चादभ्रकं मर्दयेद्रटं ? (द्दृढम्)[5] ।। 10 ।।

रोटिकां यत्नतः कृत्वा छिने (छिन्ने) पात्रे निधापयेत् ।
तस्योपरि नि-(पि-)धायाथ वह्निं प्रज्वालयेत्सुधीः ।। 11 ।।

पञ्च सप्ताथ वाराणि काञ्जिकेन च सिञ्चयेत् ।
यामत्रयाग्नियोगेन [6]सिन्दूराकारमभ्रकम्[6] ।। 12 ।।

[अभ्रकमारचतुष्षष्टि-वनस्पतीनां नामानि (सहस्रपुटविधिः)]

'दुग्धं खेर्वं वटदुग्धवज्रि-कुमारिकानामनि[7]लारितिक्ता ।
मुस्ता-गुडूची-विजया-त्रिकण्ट-वार्त्तावि[8]नी-पर्णिद्वयं ग्रहघ्नाः ।।

सिद्धार्थको वै खरमञ्जरीणां वटप्ररोहो ह्यजशोणितञ्च[9] ।
बिल्वाग्निमन्था[10]ग्निसतिन्दुका[11]नां हरीतकी पाटलिकासमूहैः ।।

---

1 घ. सप्त
2 घ. क्षौद्राभ्यां 3 घ. भवेद्दृढं 4-4 पाठोऽयं घ. पुस्तके नोपलभ्यते ।
° अस्पष्टोऽयं पाठः ।
5-5 घ. पुस्तके अस्य श्लोकस्याभावः ।
6-6 'यामत्रयाग्नियोगेन' अतः परं ख. पुस्तके परपृष्ठास्याभावः
टि. अपूर्णश्चाऽस्पष्टोऽयं योगः । अतोऽत्राऽस्माभिर्नानाग्रन्थोक्तानि चतुष्षष्ट्यभ्रक-मारकवनस्पतीनां नामानि प्रदिश्यन्ते-यैश्च सहस्रपुटभ्रकं संजायते । (सम्पादकः)
7 अनिलारिः = एरण्डमूलम् 8 वार्त्ताकिनी = बृहती 9 ग्रहघ्नः = रक्तसर्षपः
10 अग्निः = चित्रकः 11 तिन्दुकः = तेंदू इति लोके

गोमूत्र-धात्री-कलिवृ[1]क्ष-कु[2]म्भी-तालीसपत्रं च सतालमूली ।
वृषाश्वगन्धामु[3]निभृङ्गराज-रम्भाजलं सार्द्रसुसप्तपर्णम् ॥

धत्तूरलोध्रं च सदेवदारु-वृन्दा[4]-सदूर्वाद्वय-कासमर्दैः ।
मरीचकं दाडिमकाक[5]माची-सशङ्खपुष्पी-न[6]त-नागवल्ली ॥

पुनर्नवा मण्डुकपर्णिका च इन्द्रायणी-भार्ङ्गिसदेवदाली ।
कपित्थलि[7]ङ्गी-कटुकिंशुका[8]नां कोषा[9]तकीमूषकपर्ण्यनन्ताः:[10] ॥

मीनाक्षिका-कारवि-तैलपर्णी-कु[11]म्भीतथार्द्रा सशतावरीणाम् ।
एभिश्च तोयैः स्थितखल्वमध्ये विघर्षयेच्छुष्कभवं तथैव ॥

वनोत्पलानां पुटमग्निशीतं पुनः पुनः खल्वतले विघर्षयेत् ।'
एभिः क्रियां षोडशवारमेवं वल्लीजलानां पुटमारभेच्च ॥

निश्चन्द्रगोपारुणरङ्गतुल्यं भस्मामृतं दिव्यरसायनञ्च ।
नानानुपानैरजरामरत्वं शरीरिणां सेव्यमिदं वरिष्ठम् ॥

गुणैः सहस्रावधिसेवकानां समस्तरोगघ्नमिदं प्रसिद्धम् ॥
(रा.रा.सु., चि.पा., आ.प्र. च)

(अभ्रकगुणाः)

अभ्रं गुरु हिमं बल्यं कुष्ठमेहत्रिदोषनुत् ।

---

1 कलिवृक्षः = विभीतकः   2 चि. पा. 'कुम्भी' स्थाने तुम्बीतिपाठः
3 मुनिः = अगस्त्यः
4 वृन्दा = तुलसी   5 काकमाची = मकोय इति लोके   6 नतं = तगरं
7 लिङ्गी = शिवलिङ्गी   8 = किंशुकः = पलाशः
9 कोषातकी = तोरइ इति लोके   10 अनन्ता = दुरालभा
11 कुम्भी = जलकुम्भी—काई इति लोके

### अशुद्धाभ्रकदोषाः

अशुद्धाभ्रं निहन्त्याशु वध ? (वर्द्ध-) येन्मारुतादिकम् ।
अहितं छेदयेद्यन्त्रं मन्दाग्निर्क्रिमिवर्द्धनम् ।। 13 ।।

इत्यभ्रकमारणम्

### सत्वपातनविधिः

○ [1]धान्याभ्यन्तर ? निर्मूल्यं ? रसेनैव च मर्दयेत् ।
वदरीमूलसौवीर्जवीरस्य चसकं(?) ।। 14 ।।[1]

आतपे शोषयेदभ्रं यावत्तद्दृढतां व्रजेत् ।
मृद्भाण्डेऽथ विनिक्षिप्य कांजिकेन तु पूरयेत् ।। 15 ।।

तदधः स्थापयेद्भाण्डं तदधः कांस्यपात्रकम् ।
हेमन्ते कारयेद्विद्वान् नान्यथा तन्न ? (तच्च ?) सिद्ध्यति ।। 16 ।।

पुनः पुनः प्रदातव्यं सौवीरादिकमादरात् ।
पृथक्पात्रेऽथ तत्सर्वं प्रयत्नेन तु धारयेत् ।। 17 ।।

एवं कृते भवेत्सत्त्वं गगणाहुति ? (ह्वय ?) मद्भुतम् ।
माषमात्र नरो नित्यं प्रयत्नेन तु भक्षयेत् ।। 18 ।।

माषमात्रप्रयुक्तेन कलौ भवति निश्चलः ।। 19 ।।○

---

1-1 भ्रष्टोऽयं श्लोकः

○–○ पाठोऽयं ख. पुस्तके नोपलभ्यते । अतिविचित्रोऽयं पाठः— यतोऽनेन विधिना सत्त्वं नैव सम्भवति (सम्पादकः) । अतोऽत्र अभ्रकसत्त्वपातन—

(मारिताभ्रकस्य गुणाः)

अभ्रं कषायं मधुरं सुशीत-मायुष्करं धातुविवर्द्धनञ्च ।
हन्यात् त्रिदोषं व्रणमेहकुष्ठं प्लीहोदरं ग्रन्थिविषक्रिमींश्च ।। 20 ।।

(मनःशिलाशोधनम्)

(अशोधितमनःशिलाया दोषाः)

[1]मनःशिला मन्दवलं च चून (नूनं)
करोति जन्तोऽशुभपाकहीना ।
मतकालानुबंधं ? कुरुते च मूत्रं
(मलस्य बन्वं किल मूत्ररोध)
सशर्करं कृच्छ्रगदं करोति ।। 1 ।।

(शोधनम्)

पचेत् त्र्यहमजामूत्रै (त्रे) र्दो (दो-) लायन्त्रे मनःशिला (लाम्) ।
भावयेत् सप्तधा पित्तैरजा-लै(याः)शुद्धिमिछति(मृच्छति)।। 2 ।।[1]

अथवा कूष्माण्डरसैः दोलायन्त्रे मनःशिला ।।

(शोधितमनःशिलाया गुणाः)

मनःशिला गुरुर्वर्ण्यो(र्ण्या) त्रिष्णो ? (सरोष्णा) लेखनीकटुः ।
तित्तत्र स्निग्धा विरकाचासकाशः ? (विषश्वास-कासभूत)कफास्रनुत्
।। 3 ।।

इति मनःशिलाशोधनम्

---

विधिः प्रदर्शितः—

'ऊर्णा सर्जरसञ्चैव क्षुद्रमीनसमन्वितम् ।
एतत्सर्वन्तु सञ्चूर्ण्य छागदुग्धेन पिण्डिका ।।
कृताध्माता खराङ्गारैः सर्वसत्त्वं निपातयेत् ।।'

1-1 ख. पुस्तके पृष्ठाभावादिदं श्लोकद्वयं न दृश्यते ।

(हरितालशोधनमारणम्)

धेनुमूत्रकुमारीभ्यां दोलिकायां च शोधयेत् ।
तत उत्द्धृत्य ताभ्यां च मर्दयेत् हरितालकम् ।। 1 ।।

रोटिकां ? कवचीयन्त्रे गजाख्ये ? (दहेत्तं ?) वालुकं ? (बालुका ?) दहेत् (वृतम्) ।
हरते सर्वदोषांश्च भेषजानामनुत्तमम् ।। 2 ।।

(हरिताल-गुणाः)

हरितालं कटु स्निग्धं कषायोष्णं विषं जयेत् ।
कण्डू-कुष्ठास्यरोगास्र-कफपित्तकचव्रणान् ।। 3 ।।

(अशुद्धतालदोषाः)

अशुद्धं तालमायुघ्नं कफमारुतमेहकृत् ।
पातं ? (तापं) स्फोटाङ्गसङ्कोचं कुरुते तेन शोधयेत् ।। 4 ।।

(भस्मविधिः)

तालकं दोलिकायन्त्रे गोमूत्रेण च शोधयेत् ।
कुमारीरसतो मर्द्य समभागो (गा-)ऽथ शु[1]क्तिकः (का) ।। 5 ।।

रोटिकां कारयेद्वह्नौ (ह्नि) दद्याद् गजपुटोद्भवम् ? (प्राज्ञः[2] सुयन्त्रके) ।
द्वादशप्रहरं यावत् ततस्तस्मात्समुद्धरेत् ।। 6 ।

[3]निर्गन्धञ्चापि निश्चन्द्रं निर्धूमञ्च परीक्षयेत् ।
गुञ्जाद्वयं भक्षणीयं नागवल्लीदला-न्वु ? (न्वि-) तम् ।। 7 ।।[3]

---

1 घ. मुक्तिका

2 पाठोऽयं र. यो. सागरादुद्धृतः तत्र योगोऽयं तालकेश्वररसनाम्नोपलभ्यते । अत्र तु भूधरपुटेन योगो निष्पादनीय इत्यस्माकं सम्मतिः । गजपुटापेक्षया हरिताले भूधर-पुटस्य ज्यायस्त्वात् । (सम्पा.)

3-3 पाठोऽयं घ. पुस्तके नोपलभ्यते ।

मासमेकं द्वयं वापि दुग्धोदनं जितेन्द्रियः ।
हरते सर्वकुष्ठानि नाऽत्र कार्या विचारर्णात् ? (णा) ।। 8 ।।

इति हरतालशोधनम् (मारणञ्च)°

अथ पारदविधि

(पारदस्य जातयः कञ्चुकाः दोषाश्च)

चतुर्विधः पारदः स्याद् ब्राह्मणः क्षत्रियस्तथा ।
वैश्यः शूद्रोऽथ सप्तास्य कञ्चुकाः दोषविंशतिः ।। 1 ।।

योजयेत् पारदं प्राज्ञो ब्राह्मणो (णं) देहसिद्धये ।
रसायने क्षत्रवैश्यौ शूद्रं विष्टादि कर्मसु ।। 2 ।।

क्रमाच्छ्वेतोऽरुणः पीतोऽसितो वर्णश्चतुर्विधः ।।

(पारदमहत्त्वम्)

यो यु[1]ष्मा ? (यक्ष्मा-)ऽनिलकुष्ठदोषशमनः श्लेष्मापहो[2] मूर्च्छितः
पञ्चत्वं च[3] गतो ददाति निय[4]तं रा[5]ज्यं चिरञ्जीवित्त (तम्) ।
ब[6]द्धः खे गमनं करोति सततं विद्याधरत्वं तथा—
सोऽयं पातु यु[7]गे युगे[8]युगपतिः श्रीसूतराज प्रभुः ।। 3 ।।

---

° तालकस्योड्डयनशीलत्वादयं प्रयोगोऽनयारीत्या न सिद्धयति । अतः कुमारीरस-मर्दितं शुद्धहरितालस्याग्नौ क्षारमन्तराऽवस्थानं दुर्घटमतस्तदाऽऽश्रयो ग्रहीतव्य इति रहस्यम् । (सम्पादकः)

1 घ. पत्र 160. या जुष्मा घ. पत्र 175 योजुष्मा 2 ख. श्लेष्मापस्तो
3 घ. 160. गततो घ. 175. गगदो 4 घ. 175 निव्यतं 5 घ. 175. राजं
6 घ. 160. बद्ध 7. घ. 175. तथा 8 घ. 160., ख. जगपतिः

पारदः सर्वरोगाणां जेता[1] पुष्टिकरः स्मृतः ।
°सुज्ञैन सा[2]धितः कुर्यात् संधि[3]द्धं ? स (संसिद्धि) देहलोहयोः° ।।4 ।।

(पारदस्य पर्यायाः)

°रसेन्द्रः पारदः सूतो हर[4]जः सूतको रसः ।°
मुक[5]न्दश्चेति नामानि ज्ञेयानि रसकर्मसु ।। 5 ।।

एवं वर्णविभेदेन ज्ञातव्यः तत्त्वदर्शि[6]भिः ।
श्वेतकूपाद्रसेन्द्रः स्यात् ? पीतशीतसमुद्भवात् ? ।।
(ईषत्पीतो रसेन्द्रः स्यात् श्वेतद्वीपसमुद्भवः ?) ।। 6 ।।

अरुणो दरदसं[7]ज्ञः कृष्णो[8] ना[9]गसमुद्भवः ।

इति ज्ञातिवर्णभेदः

(पारदलक्षणम्)

अन्तः सुनीलो [10]बहिरुज्वलो यो[11]
मध्याह्नसूर्यप्रतिमप्रकाशः ।
शस्तोऽथ धूम्रः परिपा[12]ण्डुरश्च
चित्रो न योज्यो रसकर्मसिद्धौ ।। 7 ।।

दोषहीनो यदा सूतस्तदा मृत्युरुजापहः ।
साक्षादमृत-मेष ? (तुल्योऽयं) दोषयुक्तो रसो विषम् ।। 8 ।।

---

1 घ. 175 येनां 2 ख. साधिते °–° पाठोऽयं घ. 175. नोपलभ्यते ।
3 घ. 160. मसिद्धं
°–° पाठोऽयं घ. 175. नोपलभ्यते
4 घ. 160. हरडा 5 घ. 160. मूकन्द
6 घ. 160. दर्शिनी, 175 दर्शिनः
7 ख., घ, 130. संज्ञो 8 ख. कृष्णा 9 घ. 175 गाग
10 ख. घ. घ बहि 11 घ. घ. या 12 घ. 160. पांडरम्यं घ. 175. पांडुरम्यं

पारदमहादोषाः

नागोवङ्गोमलोवह्निश्चा[1]ञ्चलयं च विष गिरिः ।
असह्याग्निर्महादोषाः नि[2]सर्गाःपा(र्गात्पा)-रदे स्थिताः[2] ।। 9 ।।

भुक्तः[3]? (भौमः) कुष्ठ[4]करः शि[5]लो-चय(च्चय)-भवो[5]
जा[6]-ड्यौ(ड्यं)वक्त? (मरुद्) द्वारियो ? (वारिजः[6]),
वान्ति-भ्रा[7]न्तिकर(करो) [8]स्तथा (तथाऽतिबलिनौ[8]
तौ नाग-वङ्गौ ध्रुव[9]म् ।
दो[10]षौ द्वौ गलगण्ड-गु[11]ल्मजनकौ
त[12]स्मादशुद्धो रसः[12],
नादे[13]यो गदितानि पूर्वमृषिभिः
[14]कर्माणि चाष्टादश[14] ।। 10 ।।

जाड्यं कुष्ठं दाद (दाह)-वीर्यनाशो (शे) मू[15]र्च्छा च जायते ।
मृ[16]त्युस्फोटाङ्ग-खञ्जाश्च कु[17]र्वन्त्यन्य ? (न्त्यष्टौ) क्रमा(क्रमात्)[17]
स्मृताः ।। 11 ।।

इति वर्णभेदः

---

1 ख. चाचलभं 2-2 घ. (160). निसर्ग्रा परिदो स्थितः, घ. 175. निसग्रा परदो स्थितः

3 घ. (175). मुक्ता 4 घ. 160. कुष्टकरः 5-5 घ. 175. सिलोचद्भवयो

6-6 घ. 160. पाड्यौ छद्वारियो 7 घ. 175. भांति 8-8 घ. 160, तथात्ति-र्वेलिनौ लौ 9 घ. 175. ध्रुवम् 10 घ. 160 दोषा 11 घ. 175. गुल्प-जनकौ 12-12 घ. 160 तस्मादुसुद्धो रसो 13 ख. नादेयां 14-14 ख. कर्मा चाष्टादशा, घ. 175. कत्नानि चाष्टादशाः

15 घ. 175 मूच्छां 16 घ. 175. मृत्युस्फोटामसंजा च 17-17 घ. 160 कुर्व-न्त्यान्य क्रमस्मृताः घ. 175. कुवत्यान्य क्रमाः स्मृताः

इति वर्णभेदः ?

स्वाभाविका(:) स[1]त्यगुणा (सन्त्यगुणा) रसेस्मिन्
[2]नागाऽ[3]हिवङ्गामलवह्निसंज्ञौ ।[2]
ना[4]गाद्भवेयुर्गलगण्डरोगाः
कुष्ठं च वङ्गान्मरणं विषे[5]ण ।। 12 ।।

मलेन मूर्च्छा दहनेन दाहो
[6]वीर्यच्युति स्याद्रसचञ्चलत्वात्[6] ।
जाड्यं [7]महत्कञ्चुकयोदराणि[7] ?
(जाड्यं गिरेः स्फोटचयोऽग्निभूत ?)
ततो विशुद्धोऽग्निमनो रसे[8]न्द्रः ?
(स्तस्माद्रसेन्द्रः सुधिया विशोध्यः ?) ।।13 ।।

इति पोटली पट[9]ली ?

पारदशोधने

(ऊर्ध्वपातनसंस्कारः)

दिनैकं म[10]र्दयेत्सूतं कुमारीसम्भवै[11]र्द्रवैः ।
तया[12](तथा) चित्रकजैः [13]क्वाथैर्मर्दयेदेकवासरम्[13] ।। 14 ।।

काक[14]माचीरसैस्तद्वद् दिनमेकं च मर्दयेत् ।
त्रिफलायास्तथा क्वाथै[14] रसो मर्द्य प्रयत्नतः ।। 15 ।।

---

1 घ. 160. सत्यणं घ. 176. सत्यण 2-2 घ. 176. नागामलवह्निसंज्ञो
3 'अहि'रित्यनेन विषं ज्ञेयम् । 4 घ. 160. नागोद्भवेयँ, घ. 176 नागाद्भवेयं
5 घ. 160. विषेसा
6-6 ख. 'वीर्यच्युति स्याद्रसकवलस्यात्', घ. 160. वीयं च्युतं स्वाद सक्कृत्त्वात्' स्या. घ. 176. 'वीर्यं च्युतं स्वाद-सक्कृत त्वात् 7-7 घ. 160, 176. महत्कं-चकपोदराणि 8 घ. 160, 176. रसेंद्रै
9 घ. 176. पटलीण
10 घ. (160) मर्दियं, घ (176) मर्दीय 11 ख. संमवे, घ 160 कुमारीरसं भवैद्रवै
12 ख. तजा, घ (160) तया 13-13ख. घ. (175) रसो मर्धि प्रयत्नतः
14-14 पाठोऽयं ख. घ (175) ग्रंथयोर्नोपलभ्यते

ततस्तेभ्यः पृथक् कुर्यात् सूतं प्रक्षाल्य काञ्जिकैः ।
ततः क्षिप्त्वा रसं खल्वे रसादर्धं च सैन्धवम् ।। 16 ।।

मर्दयेन्निम्बुकरसैर्दिनमेकम[1]नारतम् ।
ततो राजी रसोनश्च मुख्य[2]श्च नवसादरः ।। 17 ।।

एतं र[3]ससमैस्तद्वत् सूतो म[4]र्द्यस्तुषाम्बु[5]ना ।
°ततः संशोष्य (संशोध्य) चक्रा[6]भं कृत्वा[7] लिप्ता[7](लिप्त्वा) च
हिङ्गुना° ।। 18 ।।

द्वि[8]स्थालीसम्पुटे धृत्वा पूरयेल्लवणेन च ।
अ[9]द्यः (अधः)स्थाल्यां ततो मुद्रां दद्याद् दृढतरां भिषक् ।। 19 ।।

विशेषा[10]ग्नि (विशोष्याग्नि) विधायाद्योनिषिञ्चेदम्बुनोपरि ।
ततस्तु कुर्याती(कुर्यात्)तिप्तोग्नि(तीव्राग्नि)त[11]दधः प्रहरत्रयम् ।।20।।

एवं निपत्यया[12]त्पूर्वं (निपातनादूर्ध्वं)रसो दोषविवर्जितम्(तः) ।
अथो[13]द्ध्वं-पिठरीमध्ये लग्नो ग्राह्यो रसोत्तमः ।। 21 ।।

---

'काकमाची-रसैः सार्द्धं दिनमेकं तु मर्दयेत् ।
रसोन स्वरसैः सूतः नागवल्लीदलोत्थितैः ।।
त्रिफलायास्तथा क्वाथैः' इत्यधिकः पाठः रसेन्द्रसारसङ्ग्रहे दृश्यते ।

1 ख. घ (160), घ (176) मनंतरं 2 घ. (160) मुखं च

3 घ (160) रसं समस्तद्वत् 4 ख. मर्द्यं, घ (176) मद्यं 5 घ (176) सुखाम्बुना

6 घ (176) चक्रानां 7-7 कृत्व लिह्यां

°-° अस्मिन् स्थाने घ पुस्तके 160 तमे पुटे 'छितं कृत्वा चर्णं युक्ताथ मेलयेत्' इति पाठः । अस्मात् परं तत्र पूर्वोक्त स्वेदाधिकारस्य कतिचित् श्लोकाः पुनरुक्ताः । पारदविषयकश्लोका अस्मात् परं तत्र नोपलब्धाः ।। (सम्पा.)

8 घ (176) अस्थाली 9 घ. (176) अथः

10 घ (176) विष्याग्नि 11 घ (176) तदर्धे

12 घ (176) निपत्ययत्यूर्द्धो 13 ख. अधोर्ध

दोषाः (मतान्तरेण)

मलदोषो भवेदेको द्वितीयो वह्निसंज्ञकः ।
विषदोषस्तृतीयः स्याच्चतुर्थो दर्पसंज्ञकः ।। 22 ।।

उन्मत्तः पञ्चमो ज्ञेयः पञ्चदोषा रसायने ।। 23 ।।

(सप्तकञ्चुकाः)

पाटली पटली भेदी दुर्गन्धी सन्धिविग्रही ।
आद्रवा तु लघु द्रावी सप्तैता कञ्चुकाः मताः ।। 24 ।।°

(पारदमलनाशनोपायः)

फलत्रिकं चित्रक-रक्तसर्पा ? कुमारिकन्या बृहती कषायाः ।
विमर्द्य सूतं त्रिदिनानि यावत् विमुंचित ? (विमुच्यते)
पञ्चमलादिदोषान् (षैः) ।। 25 ।।*

राज[1]वृक्षो मलान्हन्ति पावको हन्ति पावकम् ।
अङ्कोलश्च विषं हन्ति कुमारी सप्तकञ्चुहृत् ।। 26 ।।

वज्रा[2]र्क-ब्रह्मबी[3]जानि तुम्बि[4]नी वज्रकन्द[5]कम् ।
एवं सम्मर्दितः सूतो जहाति सप्तकञ्चुकम् ।। 27 ।।

---

° र. रा. सु. 'पर्पटी पाटली भेदी द्रावी मलकरी तथा ।
अन्धकारी तथा ध्वांक्षी विज्ञेयाः सप्तकञ्चुकाः ।।'
बृ. यो. त. (बौद्धसर्वस्वात्)—
"मृत्पाषाणजलाख्याश्च कालीका पालिका तथा ।
श्यामा कपालिका चेति पारदे सप्तकञ्चुकः ।।"

* "कुमारिकाचित्रकररक्तसर्षपैः कृतैः कषायैर्बृहती विमिश्रितैः ।
फलत्रिकेणापि विमर्दितो रसो दिनत्रयं सर्वमलैर्विमुच्यते ।।"
(र.रा.सुं., मा.प्र)

1 राजवृक्षः कृतमालः

2 वज्रः = सेहुण्डः 3 ब्रह्मबीजानि = पलाशबीजानि 4 तुम्बिनी = कटुतुम्बी

5 वज्रकन्दः = अरण्यसूरणः

इष्टिका-राजिका-गौ[1]री-गृहधूमा[2]ग्निसर्षपैः ।
अङ्कोटमूलैः सूतस्य व्रजेयः ? (संहेयाः) सप्तकञ्चुकाः ।। 28 ।।

(पारददोषहरद्रव्याणि)

रजनी-कनकद्राव-कुमारी-महिषीमलैः ? ।
भृङ्गराजाभयांकोल-चित्रमूल-सुराह्वयाः ।। 29 ।।

अपमार्गस्त्व[3]मी सर्वे रसदोषान्हरन्ति हि ।

(पारदबुभुक्षा ?)

अथवा नागवल्ली(ल्या) च सुराचैव (सुरया चैव)
विमर्दयेत् (मर्दयेत्) ।
अहोरात्रा(रात्र-)त्रयेणैव [4]ग्रासे धातुचर (चरं) मुखम्[4] ।। 30 ।।

(पारदभस्म लक्षणम्)

अर्द[5]धूत्वं ? (आर्द्रत्वं) च घन[6]त्वं च चापल्यं गुरु[7]तैजसम् ।
[8]पञ्च यत्र न विद्यन्ते[8] मृतं सूतं तदुच्यते ।। 31 ।।

(विषभेदा)

कालकूटो वत्सनाभः शृंटाक ? (शृङ्गिक-)श्च प्रदीपनः ।
हालाहलो ब्रह्मपुत्रो हारिद्रः सक्तुकस्तथा ।। 32 ।।

सौराष्ट्रिक इति प्रोक्ताः विष-भेदा अमीनव ।। 33 ।।

---

1 गौरी=कुमारी  2 घ. गृहधूमासि-
3 ख. समी
4-4 घ. 176. गृसेद्वार्डंचरं मुषं
5 घ. 176. अदत्वं  6 घ. 176. घनत्यं  7 घ. 176 गुडतैयसं
8-8 घ. 176, पंचपन विद्यते

(अथोपविषाः)

अर्क-सेहुण्ड-धत्तूर लाङ्गली-करवीरकाः ।
गुञ्जाऽहिफेना वित्येताः सप्तोपविषजातयः ।। 34 ।।

(पारदस्य छिन्नपक्षता)

एतेपि(एतैर्वि-) मर्दितः सूतश्छिन्नपक्षः प्रजायते ।
मुखं च जायते तस्य धातू च (धातूंश्च) ग्रसते त्वरात् ।। 35 ।।

(रसकशुद्धिः)

नरमूत्रश्च (त्रे च) गोमूत्रे सप्ताहं रसकं पचेत् ।
दोलायन्त्रेण शुद्धिः(द्धं) स्यादतः (ततः) कार्येषु योजयेत् ।। 36 ।।

रससिन्दूरविधिः)

सूतकं गन्धकं कुर्यात् समभागं सुकज्जलम् ।
नवसारं चतुर्थांशं कौमारीरसमर्दितम् ।। 37 ।।

काचकूप्यां विनिक्षिप्य सप्तवस्त्रयुतां मृदा ।
विलिप्य परितो वक्त्रे मुद्रां दत्त्वा च शोषयेत् ।। 38 ।।

अधः सच्छिद्रपिठरी-मध्ये कूपीं निधापयेत् ।
पिठरीं बालुकापूरैर्भृत्वा चाकूपिकागलम् ।। 39 ।।

शरावेण मुखं रुद्ध्वा वह्निं प्रज्वालयेच्छनैः ।
तस्मादप्यधिकं किञ्चित् षोडशं प्रहरं यतः ।। 40 ।।

रससिन्दूरकं सूतमधस्तिष्ठति निश्चितम् ।
भक्षयेद्रक्तिकाः पञ्च मरिचेन समं रसम् ।। 41 ।।

क्षुद्बोधकारकः प्रायः सद्यः कामाग्निदीपकः ।
ज्वरं प्रमेहं कासं च नाशयेदनुपानतः ।। 42 ।।

(द्वितीयविधिः)

पारदस्य चतुर्भागं त्रिभागं गन्धकस्य च ।
नवसादरैकभागः स्यात् चिकसी ? रसमर्दितः ।। 43 ।।

एकविंशत् पुटैस्तद्वत् ततः रक्तोत्पलद्रवैः ।
षोडश-प्रहरैरग्ने (प्रहरेष्वग्नौ) वधः सिन्दूरवद्भवेत् ।। 44 ।।

इति रससिन्दूरकरणम्

(रसकर्पूरम्)

पारदं सैन्धवं तुल्यं काशीशं चेष्टकारजः ।
सर्वतुल्यं च तत्सर्वं गाढखल्वे विमर्दयेत् ।। 45 ।।

कृत्वा डमरुकायन्त्रे वह्निं प्रज्वालये-च्छनैः ।
षोडशप्रहरं यावदूर्ध्वपातेन तिष्ठति ।। 46 ।।

अनेन विधिना नूनं रसकर्पूरकं भवेत् ।।

इति रसकर्पूरकरणम्

(पारदगुणाः)

देहस्य शुद्धिं कुरुते च पारदो
नानारुजं यो हरते सतूत्तमः ।
करोति वृधि (वृद्धि) बलपुष्टितेजसां
कल्पायुदेहं च करोति नूनम् ।। 47 ।।

(अशुद्धपारदविकाराः)

संस्कारहीनं(नः) खलु सूतराजो यः सेव्यते (सेवते) तस्य
करोति बाधाम् ।
देहस्य नाशं च करोति नूनं कुष्ठादिरोगाञ्जनयेन्नराणाम् ।। 48 ।।

(पारदगुणाः)

पारदः क्रिमिकुष्ठघ्नं (घ्नः) चाक्षुष्योष्णो रसायनम् ।।

समगगनसुजीर्णं सूतकं देहयोग्यं
प्रतिदिनमथ गुञ्जां भक्षते सोमवृध्या (यः स वृद्धया) ।
षडधिकदशमाषैर्मन्मथैकप्रवाहे(हो)
बलिपलितविहीनश्चन्द्रताराार्कजीवी ।। 49 ।।

मूर्च्छितो हरते व्याधीन् मृतो दारिद्रचनाशनम् ।
वद्धः खे चरतां याति पारदे गुण ईदृशाः (शः) ।। 50 ।।

[1]त्रिसिन्दूरं ? समं कुर्यान्मत्स्याक्षीरसयोगतः ।
सर्पाक्षीरसभावेन ? प्रमेहान्विंशतिं हरेत् ।। 51 ।।[1]

इति पारदस्य रससिन्दूर-सरकर्पूरकरणम्

अथ गन्धकशोधनम्

पीतं श्वेतं तथा कृष्णं कपोतं रक्तमेव च ।
तत्रादौ परिभाषोक्ता ? सिधिकाया(शुद्धिः कार्या)विचक्षणैः ।। 1 ।।

लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् ।
तप्ते घृते तत्प्रमाणं क्षिपेद् गन्धकजं रजः ।। 2 ।।

विद्रुतं गन्धकं ज्ञात्वा दुग्धमध्ये विनिक्षिपेत् ।।

---

1-1 योगोऽयमसमीचीनः । (सम्पा.)

(गुणाः)

[1]गन्धाप्ता ? पलिमृप्युनाशनं ?[1]
[2]यथा भयानश्यति ? कानने मृगः ।[2]
यथा रुजो यान्ति हि देहसम्भवा ?○
..............................................

गन्धकः कटुकः पीके वीर्योष्णः पित्तलो (पित्तलः) रस (सरः) ।
हन्ति कुष्ठक्षयप्लीह-[3]कफवाता-न्नशायनः (रसायनम्) ।। 4 ।।

गन्धकं त्रिफलायुक्तं गन्धाज्येनैव ? (गव्याज्येनैव)भक्षयेत् ।
तस्य नाना-तुजो(रुजो) हन्ति[3] यथा ? (यदा ?) सूतेन संजुते
(संयुतः) ।। 5 ।।

(अपथ्यम्)

रसं कषायं कटुकं तैलं मांस च काञ्जिकम् ।
क्षाराम्ललवणादीनि विदुरान्नं (वि[4]दलान्नं) विशेषतः ।। 6 ।।

(पथ्यम्)

यवषष्टिकगोधूमं घृतं क्षीरं सशर्करम् ।
एतद्भोज्यं सदा पथ्यमपथ्यं च विवर्जयेत् ।। 7 ।।

इति गंधक शोधनम्

---

1-1 घ. गंधतापलं घृता मृत्युनाशनं

2-2 घ. यथा भयान्न पश्यति कानने मृगः

○ अयमपूर्णः पाठो भ्रष्टरूपेणोपलभ्यते । मूले यथा लिखितस्तथैवात्र दर्शितः ।
(सम्पा,)

3-3 पाठोऽयं ख. पुस्तके नोपलभ्यते

4 घ. विटुरान्नं

(ह्रिङ्गुलशोधनम्)

दरदस्त्रिविधो ज्ञेयश्चर्मारः शुकतुण्डकः ।
हंसपादस्तु तत्रान्यः रसकर्मसु योजयेत् ।। 1 ।।

हिङ्गुलं माहिषीक्षीरैरम्लवर्गैश्च भावितम् ।
खरमूत्रेण वा दोला यन्त्रे शुद्ध्यति निश्चितम् ।। 2 ।।

(हिङ्गुलात् पारदनिष्कासनविधिः)

निम्बूरसैर्निम्बपत्ररसैर्वायाममात्रकम् ।
पृष्ट्वा (पिष्ट्वा) दरदमूर्ध्वं च पातयेत्सूतयुक्तितः ।। 3 ।।

ततः शुद्धरसं तस्मान्नीत्वा कार्येषु योजयेत् ।

(गुणाः)

हिङ्गुलं पित्तकफनुच्चाक्षुष्यं विषकुष्ठनुत् ।। 4 ।।

इति हिङ्गुलशोधनम्-पारदनिष्कासनविधिः (विधिश्च)

(वज्रमुद्रा)

[1]खडीखटिक[1] ? भस्माम्बु लवणैरथवा ध्रुवम् ।
कारीषभस्मलवणं द्वाभ्यां[2] मुद्रा प्रकीर्तिता ।। 1 ।।

विषशोधनं परीक्षणं च

विषानामथ सप्तानां शोधनं च परीक्षणम् ।
गोमूत्रे विषचूर्णन्तु सप्ताहं स्थापयेद् बुधः ।। 1 ।।

राजिकाविषमात्रेण फेनिलं च घनं पयः ।
भवत्येवं यदा कृष्णः कालकूटपरीक्षणम् ।। 2 ।।

---

1-1 ख. खटीखदिर. 2 घ. वज्र

[1]सुद्वादरे ? विषं क्षिप्तं ? करीषाग्नि प्रयोजयेत् ।
इक्षुदण्डेव लिप्तं वा ? योजयेद्रसकर्मणि ।। 3 ।।[1]

इति विषशोधनम्

शिलाजतुविधिः

हेमाद्याः सूर्यसन्तप्ताः स्रवन्ति गिरिधातवः ।
[2]यन्त्वासां (एतेषां) मृदुमृ[3]त्स्नं च यन्मलं तच्छिलाजतु ।। 1 ।।

हेम्नो वै रजत ? (रौप्यत-)स्ताम्रात्तथा स्यादायसादपि ।
गोमूत्रगन्धः सर्वेषां यथापूर्वमनुत्तमम् ।। 2 ।।

तत्र यत्कृष्णममलं स्निग्धं निश्शर्करं च यत् ।
गोमूत्रगन्धनि[3]लयं तत्प्रधानं प्रचक्षते ।। 3 ।।

(शोधनम्)

°सिलायतु (शिलाजतु)कुष्ट ? (दुष्ट-) कीटादोषोमसम ?
(कीटदोषोपशम) हेतवे ।

---

1-1 श्लोकस्यास्य कोऽभिप्राय इति न ज्ञायते । (सम्पा.)

2 ख. जघ्यास्य 3 ख. मृत्यां

3 घ. नीलं

°–° अतिभ्रष्टोऽयं पाठः । अतोऽत्र हारीतादि-पूर्वाऽऽचार्याणां मतान्यस्माभिर्निद-र्श्यन्ते—

'लोहस्थितं निम्बगुडूचिसर्पिर्यवैर्यथावत् परिभावयेत्तत् ।
सन्तानिका-कीट-पतङ्गदंश-दुष्टौषधी दोषनिवारणाय ।।'
(हारीतः)

''बहिर्मलमपाकर्तुं केवलजलेन प्रक्षालनं कर्तव्यं, ततस्तदन्तर्गतमृत्तिका सिकता-दिदोषदूरीकरणाय—

व्याधिव्याधितसात्म्यं समनुसरन् भावयेदयः पात्रे ।.......... ....

ष[1]ट्वापांत्तज्यथोवा वह्नौ सर्षपामृतवह्निकैः[2] ? ।। 4 ।।
[3]सैद्यवैस्तु मयेद्धर्मे[3] निर्दोषंश्च दता ध्रुवम्[4] ।।०

(अन्यविधिः)

मु[5]ख्यंसिलाजीतु सिलां इति सूक्ष्मखण्डं प्रकल्पितम् । ?
(मुख्यां शिलाजतुशिलां सूक्ष्मखण्डप्रकल्पिताम् ।)
निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः ।। 5 ।।

मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम् ।
[6]स्थापयित्वा च मृत्पात्रे धारयेदातपे बु०धः ।। 6 ।।

उपरिस्थं घनं यस्य (यत्स्यात्) तत्क्षिपेदन्यपात्रके ।
धारयेदातपे तस्मादुपरिस्थं घनं नयेत्[6] ।। 7 ।।

एवं पुनः पुनीत्वा (पुनर्नीत्वा) द्विमासाभ्यां शिलाजतु ।
भूयात्कार्यक्षमं वह्नौ क्षिप्रं (क्षिप्तं) लिङ्गोपमं भवेत् ।। 8 ।।

---

........ ...फलत्रयस्य यूषेण पटोल्या मधुकस्य च ।
शिलाजमेवं देहस्य भवत्यत्युपकारकम् ।।"
(वाग्भटः)

"उष्णे च काले रवितापयुक्ते व्यभ्रे निवाते समभूमिभागे ।
चत्वारि पात्राण्यसिता-यसानि न्यस्यातपे तत्र कृतावधानः ।।
शिलाजतु श्रेष्ठमवाप्य पात्रे प्रक्षिप्य तस्माद् द्विगुणं च तोयम् ।
उष्णं तदूर्ध्वं क्वथितं च दत्वा विशोधयेत्तन्मृदितं यथावत् ।।
ततस्तु यत्कृष्णमुपैति चोद्ध्वं संतामिकावद्रविरश्मितप्तम् ।।"
(अग्निवेशः)

1 ख. खटाया 2 घ. वह्निकौ
3-3 घ. संद्यषैर्व्वंपयैद्धंमौ 4 ध्रर्वात्
5 घ. मूखं
6-6 पाठोऽयं घ. पुस्तके नोपलभ्यते ०ख. शुचौ

[1]निर्धूमं च ततः शुद्धं सर्वकार्येषु योजयेत्[1] ।
अधः स्थितं च यच्छे[2]लं तस्मिन् [3]नीरं विनिक्षिपेत् ।। 9 ।।

[4]विमर्द्य धारयेद् घर्मे पूर्वं-चैवतन् (वच्चैवत-)न्नयेत्[4] ।। 10 ।।

(अन्यविधिः)

[5]शिलाजितु स्निक्र[6]मं[5] ? [6]द्रावयेदग्निनाजले[6] । ?
(शिलाजतु समानीय) द्रावयेदग्निना जले ।
कंव[7]लंन ? (कम्बलेन ?) दृढं सप्तवार (रं) [8]यूतां (पूतं)
तु कारयेत्[8] ।। 11 ।।

तनोरं (तन्नीरं) लोहजे पात्रे नीत्वा वह्नौ पुनः पचेत् ।
सान्द्रीभूतं भिषग्नूनं सर्वकार्येषु योजयेत् ।। 12 ।।

(शिलाजतुगुणाः)

शिला[9]ज-तुष्णं (तूष्णं) कटुकं योग[10]वाहि-रसायनम् ।
[11]स्वेद-प्रमेहवातार्श-कुष्ठा[12]श्मोदरपाण्डुताम् ।। 13 ।।

हन्ति श्वासक्षि उन्मादं (श्वासक्षयोन्मादं) रक्तशोफकफ-
क्रमात् ? (क्रिमीन् ?) ।
दध्य (दधि)-मत्स्यकुलत्था च (कुलत्थांश्च)
कपोतान्परिवर्जयेत् ।। 14 ।।

इति शिलाजतुकरणम् ।

---

1-1 पाठोयं घ. पुस्तके नोपलभ्यते 2 घ. च्छेषं 3 घ. शरीरं च
4-4 पाठोऽयं घ. पुस्तके नोपलभ्यते
5-5 ख. घ. ग्रन्थयोः 'शिलाजतु स्निक्ष्मं' इति खण्डितः पाठो दृश्यते ।
6-6 घ. 'द्रावयेदग्निना जले' इति पाठस्तूत्तरश्लोकगः, स्वस्थानभ्रष्टतयात्र निवेशित इति भाति ।
7 घ. कंठलेन 8-8 घ. दूतां त्रि कारयेत्
9 घ. शिलाजतूलं 10. घ. योवाही 11 ख. छेदी 12 घ. कुष्ठार्शो

(विविधद्रव्याणां शोधनम्)

तक्रेण क्षालितौ शुद्धौ नवसादर टङ्कणौ ।
कौमारी-दुग्धसम्पक्वं जयपालं च शुधिति (शुद्धयति) ।। 15 ।।

त्रिफला त्रिकटुर्वह्नौ भर्जनाच्च विशुद्धयति ।
मृल्लिप्तं भस्मना चाग्नौ लवणं शोधयेद् बुधः ।। 16 ।।

(नीलाञ्जनशोधनम्)

[1]नीलाञ्जनं चूर्णयित्वा जम्बीररसभावितम् ।
दिनैकमातपे शुद्धं भवेत्कार्येषु योजयेत् ।। 17 ।।

एवं गैरिककासीसं टङ्कणानि वराटिका ।
शङ्खं तोरी च कङ्कुष्ठं शुद्धिमायान्ति निश्चितम् ।। 18 ।।

सौवीरं ग्राहि मधुरं चाक्षुष्यं कफवातजित् ।
हिध्माक्षयश्रनुश्रीतं ? (सिध्मक्षयास्रहृच्छीतं ?)
श्रोतोजनमयंदृशं ? (स्रोतोञ्जनमपीदृशम्)[1] ।। 19 ।।

इति नीलाञ्जनशोधनम्

(नखशुद्धिः)

नखानुष्णजलैः क्षाल्य(?) भर्जयित्वा प्रयत्नतः ।
गुडु(गुड-) पथ्याम्बुनादेयं (ह्येवं) शुद्धयतीति न संशयः ।। 20 ।।

(मुक्ताप्रवालादिरत्नानां शोधनम्)

शोधयेद्दोलिकायन्त्रे यं यं त्वा ?(जयन्त्या)श्व(स्व-)रसेन च ।
[2]मणिमुक्ताप्रवालादि यामैकं शोधनं (धितं)भवेत्[2] ।। 21 ।।

---

1-1 पाठोऽयं ख. पुस्तके नोपलभ्यते ।
2-2 घ. मणिमुद्राणि च मारयेत्

कुमार्या तण्डुलीयेन स्तन्येन च निषेचनात् ।
प्रत्येकं सप्तवेलां च तप्ततप्तानि कृत्स्नशः ।। 22 ।।

मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः ।
क्षणाद् विविधवर्णानि म्रियन्ते नात्र संशयः ।। 23 ।।

उक्तं माक्षिकवन्मुक्ता-प्रवालानि च मारयेत् ।
वज्रवत्सर्वरत्नानि शोधयेन्मारयेत्तथा ।। 24 ।।

(स्वर्णसिद्धिः)

पारदं सीसकं गन्धं कुनटी तच्चतुष्टयम् ।
[2]बीजपूररसेनैव गाटं (गाढं) दिनचतुष्टयम्[2] ।। 25 ।।

लेपयेत्तारपत्राणि चतुर्विंशद्दिनानि च ।
टङ्कणेन धमेदग्नौ चेद्रुक्मस्य (भवेद्रूप्यस्य) काञ्चनम् ।। 26 ।।

(सर्वधातुमारणम्)

तालेन वङ्गं दरदेन तीक्ष्णं नागेन स्वर्णं शिलया च नागम् ।
गन्धाश्मना चापि निहन्ति शुल्वं तारं च मक्षिकजलेन-
पुनर्नभूयात् ।। (माक्षीकवरेण° हन्यात्) ।। 27 ।।

(क्षारविधिः)

क्षारवृक्षस्य काष्ठानि शुष्कान्यग्नौ प्रदीपयेत् ।
नीत्वा तद्भस्म मृत्पात्रे क्षिष्मा (क्षिप्त्वा) नीरे चतुर्गुणे ।। 28 ।।

विमर्द्य धारयेद्रात्रौ प्रातरच्छं जलं नयेत् ।
तन्नीरं क्वाथयेद्वह्नौ यावत्सर्वं विशुद्धति (ष्यति) ।। 29 ।।

---

2-2 पाठोऽयं ख. पुस्तके नोपलभ्यते ।
° पाठोऽयं वसवराजीयादूद्धृतः । (सम्पा )

ततः पात्रात्समुद्धृत्य क्षारं ग्राह्यं सितप्रभम् ।
[1]न्चूर्णाभं, प्रतिसार्यं स्यात् (पानीयं) क्वाथावस्थितं ?
(क्वाथवत् स्थितम्) ।। 30 ।।

इति क्षारद्वयं धीमानुक्तकार्येषु योजयेत् ।।[1]

(ख) 'इति श्रीयोगशास्त्रे योगज्ञाने आनंदसिधिकृतं शोधनमारणविधि सर्वधातूनां समाप्ता ।'०

(इति पञ्चदशोऽधिकारः)

1-1 पाठोऽयं घ. पुस्तके नोपलभ्यते ।
० घ. "इति श्रीआनंदभारतीविरचिते आनंदमालायां धातु-शोधन-मारण-प्रकरणम्"।

# द्वितीयं परिशिष्टम्

## (1) शशिधर तैलु

छड टं 11, नागकेशरि टं 11, पत्रज टं 11, उशीर टं 11, इलाइची टं 11 कर्पूर टं 33, अगरु टं 44 चन्दनु टं 88 इनकौ चूर्ण करि पानी सिहु वाटि करि तेलु सेर 11 मध्य घालीजौ पानी मनु 1 सेर चारु तेलु महि घालि करि पचाइजौ पीछहु भांडे महि घालि कर्पूर टं 5, कस्तूरी टं 11, चन्दनु सेर 2 वाटि छानि करि राषीजौ, इन्ह तेलु अ[1]स्णु ? कीजौ, याकौ नाउ शशिधर तैलु ।

## (2) ल्येष्ट ? (ज्येष्ठ) आषाढ चुपडई कीजौ

मोथा टं 17, आडी ? (बडी इलाइची ?? )टं 17, वालौ टं 17, सिलारसु टं 17, कूवु ? (कूठ ?) टं 17, लवंगु टं 17, बडी इला[2]इची टं 17, वा[3]लौ टं 17, चंपौ टं 17, पुष्प कंकोल टं 17, तगरु टं 17, नान्ही इलाइची टं 17, उशीर टं 17, सरेसी टं 17, तमालपत्र टं 17, तेनु सेर 10, ए औषध पाणी स्यौ वाटिजहि, पानी मनु 6 घालि करि औटीजइ, जब तैलु सिद्ध भयौ होइ तब लीजौ, पाछौ भांडे घालीजौ, ता मध्य कस्तूरी टं 10, कर्पूर टं 5, इन्ह करि वासीजौ, पाछौ चंदनु कौ चूर्णु सेर 1 घालि करिनी लेपु घुलानु वासिजौ, याकौ नाउ ससिघरु तेलु कहिजौ ।

## (3) क्वार कार्तिकु चूपरनु की जौग

व्योना ? नान्हौ वाटिजौ टं 12 ता पाछौ सुगन्धतंलु घालि करि वाटिजौ, नष टं 4, वालौ टं 4, मौथा टं 4, तज टं 4, ये वस्तु घालि वहुरि वाटीजहि ता पाछौ सर धूपीजौ, ता पाछे कूंकूम टं 4 घालिजौ, या कौ नाउ रविकरु कहिजौ ।

## (4) कूका ? प्रियङ्गु तगक (तगर ?) पुष्कर

मूलु कंकोलसुगंधा विहाइनि लवंग पद्माखु तज चौरकु त्वक्पत्री

---

1 अभ्यङ्ग ?

2-3 ये दोनों द्रव्य दो बार आये हैं ।

# प्रथमः परिशिष्टः

## रसरत्नाकरमतेनोक्तं रसप्रकरणम्[1]—(ख. ध. पुस्तकयोः)

### (१) [क्रव्यादरसः]

द्विपलं[2] गन्धकं शुद्धं[3] [4]द्रावयित्वा प्रयत्नतः[4] ।
[5]पारदं पलमानेन[5] मृतशुल्वायसी ततः ॥१॥

कर्षमानेन तन्मिश्रं ? (सम्मिश्र्य) पञ्चाङ्गुलदले[6] क्षिपेत्[6] ।
ततो[7] विचूर्णं (विचूर्ण्यं) मानेन (यत्नेन[7]) निक्षिप्याऽऽयसपात्रके[8] ॥२॥

चूल्यां[9] (चुल्ल्यां) वै न्यसेत्तेनैतत्[9] ? (निवेश्य यत्नेन) पाचयेन्मृदुनाग्निना ।[10]
[12]पात्रमात्रं हि जंवर (जम्बीर-) रसं सम्यक्[11] प्रपूरयेत्[11] ॥३॥[12]

सञ्चूर्ण्य[13] पञ्चकोलस्य[14] कषायैश्चाम्लवेतसैः[15] ।
भावना (नाः) खलु[16] दातव्या[:] पञ्चाशत्पुटमात्रया ॥४॥

भृष्टा[17]-टङ्कणचूर्णेन तुल्येन[18] सह मेलयेत् ।
तदर्द्धं कृष्णा[19]लवणं सर्वं तुल्या मरीचिका[19] ॥५॥

---

1 प्रकरणोऽयं क. पुस्तके नोपलभ्यते । 2 ख. द्वपलं 3 शुघं 4-4 ख. द्रावयित्वात्प्रंयत्नत् 5-5 ख. पारवं फलमानेन 6-6 घ. दृले छ्िपेत्—ख. दले क्षेपेत् 7-7 घ. ततोपि चूर्ण्यंमानेव 8 ख. पात्रिकं 9-9 ख. चूल्हां विन्यस्यतेनैतत 10 ग्र. पाचयेतन् 11-11 घ. सम्यक्य पूरयेत् 12-12 यो. र. पात्रं पात्रं०, वृ. यो. त. पल मात्रं, भा. प्र. जम्बीरस्य रसं तत्र पूतं पलशतं क्षिपेत् 13 ख., घ. संचूर्णं 14 ख. पंचकोलस्या, 15 भा. प्र. आम्लवेत-स्थाने 'चुक्रस्य सहितेन च' इति पाठः 16 ख. खल 17 ख. भ्रष्ट 18 ख. तुल्येसह 19 ख.० मरीचका 19-19 यो. र. तदर्द्धं पंचलवणैः सार्वसाम्य मरीचकैः ।

सप्तधा[1] भावयेत्प[2]श्चा-च्चरणकक्षार[3]वारिणा ।
ततः संशोष्य संपीष्य? (सम्पेष्य) कूपिकाजठरे क्षिपेत्[4] ॥६॥

अत्यर्थं गुरुमांसानि गुरुभोज्या[5]न्यनेकशः ।
[6]भुक्ता (भुक्त्वा) हि कण्ठपर्यन्तं चतु[7]र्वल्लमितं रसम् ॥७॥

यद्वम्ल[8] ? (पट्वम्ल-) तक्रसहितं पिवेत्दनुमानतः ? (तं पिबेदनुपानतः) ।
क्षिप्रं[9] तज्जीर्यतां[9] याति (तज्जीर्यते भुक्तं ?) जायते दीपनं पुनः ॥८॥

गोदोहमात्रं [10]तत्सर्वं द्रवी[11] भवति नान्यथा[12] ।
[13]रसः क्रव्यादि ? (क्रव्याद-) नामाय[13] (नामायं) प्रोक्तो[14] मन्थान-भैरवी (भैरवैः[14]) ॥९॥

[15]सिंहेन ? (सिंहल-)-क्षोणिपालस्य भूरिमाँसप्रियस्य च ।
द्विष्टौ ? ग्राम्य समासाद्य भैरवानंदसेविना ?[15] ॥१०॥

[16]कुर्याद्दीपन-सुद्धतं ? (मुद्धतं)[17] च पवनं दुष्टामयोच्छोषणं[17]-
तुंदस्छूल्य (तुंदस्थौल्य-) निबर्हणो गदहरः शूलर्ति-(शूलार्ति-) निर्मूलनः ।
गुल्म-प्लीह-विनाशनो बहुरुजं (जां) बिश्वंसनः (विध्वंसनः) संततं (स्रंसनः)
सेव्यो ग्रन्थिमहोदरापहरणः क्रव्यादनामा रसः[16] ॥११॥

---

1 ख. शतधा 2 ख. भावयेपश्च्या 3 ख. क्षारि० 4 ख. क्षपेत् 5 ख. भोज्यानिनेकछा: 6 ख. ये मिदं 7 ख. चतुर्वमिदं 8 ख. कटुम्ल 9-9 ख. क्षिप्रां तजीयतां 10 ख. तत सर्वं 11 ख. डवि 12 ख. नानिथा 13-13 ख. रस कारव्याधिनामोय 14 ख. प्रोक्ता ग्रंथानभैरकं 15-15 पाठोऽयं ख. पुस्तके नोपलभ्यते । यो. र. अस्मिन्स्थाने,

'सिंहलक्षोणिपालाय भूरिमांसभुजे पुरा ।
पुनर्भोजनकामस्य भैरवानन्दयोगिनः ॥
ततः क्रव्यादकः प्रोक्तो दृढं प्रत्ययकारकः'' ॥ इति पाठः

16-16 पाठोऽयं ख. पुस्तके नोपलभ्यते, 17-17 यो. र. पवनजे देहे परं शोषणम् ।

टीका:— शोध्यो गन्धक टं २०, शोध्यो पारो टं १०, मृत ताम्र टं[1] ५, (मूल में कर्षमान = २।। टं) मारो सारु टं[2] ५ (मूल में लोह भी २।। टां है) इन चौहन की एरण्ड के पात विषै पर्पटी करौ लोहे कौ भाडौ जंमीरी को रस सेर[3] ऽ५ टंक २५ अग्निमुख रस परिपक्व भरा, पीपरि, पीप्पलीमूल, चव्य, चितौ सुठी इन्ह के क्वाथ की पुटे[4] १२५ अरु अमलवेत की पुट ५०, ता पश्चात् सर्व समान भृष्ट सुहागा मेलिजौ पश्चात् सब ही से आधौ सौचरु मेलिजौ (अन्य ग्रंथों में सौवर्चल के स्थान पर पञ्चलवण का पाठ है) वाहुरी सब की समान मरिच मेलिजौ, ता पाछै चना की लोनी की पुटै औटिकरि सूखे चूक छानि कूपी मध्य राखीजौ (घ. में चणकक्षार की ७ भावनाएं व ख. में मूलपाठ में सौ भावनाएं कही गई हैं। प्राय: सभी अन्य ग्रंथों में केवल ७ ही भावनाएं कही गई हैं।) रत्ती[5] १२ खवाइजौ अनूपानु पान कौ, पीपरि के निंबु चा ? (या) तक्र स्यौ दीजौ। इति क्रव्यादरस: ।।

### (२) अग्निकुमारो रस:

कर्पूरञ्च[6] लवङ्गञ्च चित्रकं चव्य[7]कन्तथा।
दाडिमाम्लं विशेषेण[8] शृङ्गवेरञ्च रेणुकाम्[9] ।।१०।।

एतानि समभागानि सूक्ष्म[10]चूर्णानि कारयेत्[10] ।
यवक्षारं[11] तथा स्वर्जी[12] टङ्कणं लवणानि च ।।११।।

---

1 ख. टं ४ 2 ख. टं ४ (यदि १ पल ख. व घ. के टीकाकारों की मान्यतानुसार १० टांक है तो निश्चित ही १ कर्ष २।। टांक ही होगा - न ४ टां होगा न ५ टां), 3 मूल में जंबीरी का रस १ पात्र कहा गया है। चरकोक्त मानानुसार वह ४ सेर व शार्ङ्गधरोक्तमानानुसार वह ३ सेर १६ तोला होगा। ख. के टीकाकार जंबीर रस सेर १० जलाने की बात कहते हैं व घ. के टीकाकार ५ सेर २५ टं. जंबीररस लेना बताते हैं (४) मूल पाठ में पञ्चकोल और अम्लवेत के पुटों की संख्या ५०-५० है। 5 ख. में मात्रा १ रत्ती कही गई है। मूल पाठ में ४ वल्ल की मात्रा निर्दिष्ट है। कलिङ्ग मानानुसार 'त्रिगुञ्जो वल्ल उच्यते'। अत: अन्य ग्रंथकारों ने भी १।। माशा ही कहा है।

6 ख. करचूरं 7 ख. चविमेव 8 ख. नि च 9 ख. रेणुक 10 ख. सूक्ष्मचूर्णेन कारएतु 11 ख. जवखार 1 ख. सार्जी ।

त्रिकुटा[1] त्रिफला लोहं[2] सर्वमेव द्विभागिकम्[3] ।
[4]जम्बीरनिम्बुनीरेण[5] दिवसत्रयभावितम्[6] ।।१२।।

तथा[7]ऽमृतारसेनैवं[7] मर्दितं चाम्लवेतसैः[8] ।
चणकाकारमात्रेण[9] दीयते रस उत्तमः[10] ।।१३।।

नाम्ना ह्य[11]ग्निकुमारोऽयं स्वामिकार्तिकनि[12]र्मितम् ।।

अरोचकं वह्निविशेषमान्द्यं[13],
गुल्मं[14] प्रमेहं विनि[15]हन्त्यवश्यम् ।
चुक्रेणयुक्तं खलु पक्ति[16]शूलं,
सूर्योदयाद्वृ[17]द्धमतीवजातम्[17] ।।१४।।

श्वास[18]कासकफातङ्कनाशनः[19] प्राणवर्द्धनः ।
[20]कटुत्रयेण दत्तश्चेत्[20] पित्तारोचकनाशनः ।।१५।।

*-सूतराजभवं भस्म रक्ति[21]कार्द्धं प्रदीयते ।
एवं चूर्णानुपानेन वैद्यः कौतु[22]कमाभजेद् ।।१६।।*

टीकाः— जौवखारु । साजी । सुहागौ । भूज्यो । सीधो । सौचल । विड्. । समडी । सांभरि । त्रिकुटा । त्रिफला । सार । आगिली औषध सौं दूनी मात्रा लीजै ही ।। कचूर (कपूर) । लवंग । चीतौ । चव्य । अनारदाणा । ? (मूल पाठ में जम्बीरनिम्बुनीरेण दिवसत्रय भावितं

---

1 ख. त्रिकुट 2 ख. लोह 3-3 ख. द्विविधभागिकम् 4 र. यो सा. यवानी 5 र. यो. सा. नीराभ्यां 6 ख. दिवसतर्यंभवितं 7 ख. मृतारसेनैव 8. ख. चाम्लवेतसैं 9-9 ख. चणकक्षारमात्राभि 10 ख. चूर्णमुत्तमं ।

11 ख. अग्नि 12 ख. निर्मिततं 13 ख. माद्यं 14 ख. गुल्म-प्रजेदं 15 ख. बिनहंत्य 16 ख. सूलं 17 ख. द्विद्विमतीवजाता 18 ख. श्वासकासकफातका 19 ख. त्रासनं 20-20 ख. देयं त्रिकुटकं चैव 21 ख. रक्तिवार्द्यं 22 ख. वंद्यकोवुकमातजेद् ।
*-*—'सूतराजभवं ............ कौतुकमाभजेत्', पाठोऽयं ग्रन्थ-ग्रन्थेषु नोपलभ्यते । योगोऽयं घ. पुस्तके नोपलभ्यते ।

है—अतः 'अनारदाणा' यहां नहीं होना चाहिये । "जम्बीरीनींबू" की तीन दिन भावना देवें ऐसा पाठ होना चाहिये) आमलवेतस । आदौ । (मूल पाठ में अमृता = गिलोय व आमलवेतस की भावना कही गई है) रेणुका मात्रा समानु । जंबीरी के रस की भावना दिन ६॥ नींब (नींबू) के रस की भावना दिन ३॥ टंक १ चूंकनी स्यौ दीजै । सूल जाई ।। त्रिकटु के अनुपान ते । अरोचकादि जाइ । मारे पारै की आधी रत्ती के अनूपान गोदोहमात्र ? भोजन द्रवीभूत होइ ।। ईति अग्निकुसोरो रस ? ।। (इति अग्निकुमाररसः)

## (३) [पञ्चामृतरसः[1]]

अभ्रकं पारदं चैव ताम्रं लोहं च वङ्गकम् ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।।१।।

सर्वव्याधिहरो ह्येष रसः परमदुर्लभः ।।

इति सर्वव्याधिहरपंचामृतरसः

[टीका:—अभ्रक भस्म, पारद भस्म (रस सिन्दूर) ताम्रभस्म, लोहभस्म और बङ्गभस्म, ये सम भाग ले श्लक्ष्णचूर्ण बनालें । रोग-दोष व रोगी के बलाबल को देख कर इसे प्रयुक्त करे । यह सभी व्याधियों को नष्ट करने वाला परमदुर्लभ रस है ।]

## (४) इच्छाभेदीरसः[2]

शुण्ठीमरिचसंयुक्तं रसगन्धकटङ्कणम् ।
जैपालत्रिगुलं (जैपालस्त्रिगुणं) दद्यात्सर्वमेकत्रचूर्णितम् ।।१।।

इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत् ।
धावन्तश्चूलिकात् पीत्वा (यावन्तश्चुलुकाः पीतस्)
तावद्वेगान् विरोचयेत् (तावद्वारं विरेचयेत् ।) ।।२।।

तक्रोदनं च दातव्यमिच्छाभेदी यथेच्छया ।
दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ।।३।।

---

1 योगोऽयं ख. पुस्तके नोपलभ्यते । 2 योगोऽयं ख. पुस्तके नोपलभ्यते ।

ये तु संशोधनैः शुद्धाः न तेषां पुनरुद्भवः ।
बालवृद्धावतिस्निग्धः क्षतक्षीणो-तषश्वयः (भयान्वितः) ॥४॥

श्रान्तस्तुडार्त (स्तृषार्तः) स्थूलश्च गर्भिणीस्त्री नवज्वरी ।
नवप्रसूतानारी च मन्दाग्निश्च मदात्ययी ॥५॥

शल्यार्दितश्च पुरुषो न विरेच्यो विजानता ॥

इति इच्छाभेदी रसः

[टीकाः—सोंठ, काली मिरच, शुद्धपारा, शुद्धगन्धक व सुहागा सभी समभाग, शुद्ध जयपाल सोंठ से तिगुना, इनको विधिवत् पीस कर रख छोडे। यह इच्छाभेदी रस है । २ रत्ती इस रस को मिश्री के साथ शीतल जल से पिलाना चाहिये । जितने चुल्लू पानी इसके साथ पिया जावेगा उतनी ही वार रेचन होगा। छाछ और भात पथ्य में देना चाहिये । लङ्घन व पाचन औषधियों से जीते गये दोष तो पुनः प्रकुपित हो सकते हैं किंतु वमन-विरेचन रूप संशोधन द्वारा बाहर फेंक दिये गये दोषों की पुनरुत्पत्ति नहीं होती है ।

किन्तु बालक, वृद्ध, अतिस्नेहनकर्मकृत, क्षत, तज्जन्य क्षीणता, भयभीत, थका व्यक्ति, तृषार्त, स्थूल शरीर, गर्भिणी, नवज्वरी, नवप्रसूता, जिसकी अग्निमंद होगई हो, मदात्ययी व किसी शल्य से पीडित पुरुष को विरेचनार्थं अयोग्य मान कर, अनुभवी चिकित्सक को उन्हें इच्छाभेदी आदि से विरेचन नहीं कराना चाहिये ।]

(६) सन्निपातार्णवरसः[1]

विषु टं २ मरिच टं २ नौसादर टं २, मुर्दारसिंगु टं २ नीलोथोथो टं २ साजी टं २ सुहागी टं २ कपीला टं २ गौ के मूत्र सौं वांटि छाणि गोली बांधीजहि चना प्रमाण सनिपातक छया ? छिबांरौ ? वातव्याधि कह मनुष्य के मूत (मूत्र) स्यौं संधि संधि गठिया वाऊ नीकी होह अचेतु मूर्च्यौं (मूर्च्छित ?) नीको होइ इति संनिपातार्न्नवरसु ॥

1 यह योग ख. ग्रंथ में नहीं मिलता ।

(६) लोकनाथरसः[1]

शुद्धो बुभुक्षितः सूतो भागद्वयमितो भवेत् ।
तथा गन्धस्य भागौ द्वौ कुर्यात्कज्जलिकां तयोः ।।१।।

सूताच्चतुर्गुणेष्वेव कपर्देषु विनिक्षिपेत् ।
भागैकं टङ्कणं दत्त्वा गोक्षीरेण विमर्दयेत् ।।२।।

तथा शङ्खस्य खण्डानां भागानष्टौ प्रकल्पयेत् ।
क्षिपेत्सर्वे (र्वं) पुटस्थात्त (स्यान्त-)श्चूर्णं (र्ण-) लिप्तशरावयोः ।।३।।

गर्ते हस्तोन्मिते धृत्वा पुटेजपुटेन वा (पचेद्गजपुटेन च) ।
स्वाङ्गशीतं समुद्धृत्य पिष्ट्वा तत्सर्वमेकतः ।।४।।

षड्गुञ्जासम्मितं चूर्णमेके-(को) नत्रिंशमू (दू-) षणैः ।
घृतेन वातजे दद्यान्नवनीतेन पित्तजे ।।५।।

क्षौद्रेण श्लेष्मजे दद्यादतीसारे क्षये तथा ।
अरुचौ ग्रहणीरोगे कार्श्ये मन्दानले तथा ।।६।।

काश्य-(कास) श्वासेषु [गुल्मेषु] लोकनाथरसो हिता (हितः) ।
तस्योपरि घृतान्नं च भुञ्जीत कवलत्रयम् ।।७।।

मञ्चे क्षणेकमुत्तानः शयीतानुपधानकै (के) ।
अनम्ल (अनम्ल-) मन्नं सघृतं भुञ्जीत मधुरं दधि ।।८।।

प्रायेण जाङ्गलं मांसं प्रदेयं घृतपाचितम् ।
सदुग्धभक्तं दद्याच्च जातेऽग्नौ सान्ध्यभोजने ।।९।।

सघृतान्मुद्गवटकान् व्यञ्जनेष्वेव चारयेत् ।
तिलामलककल्केन स्नापथे (येत्) सर्पिषाऽथवा ।।१०।।

---

1 योगोऽयं पत्राभावात् ख. पुस्तके नोपलभ्यते ।

अभंज (अभ्यञ्ज-) येत् सर्पिषा च स्नानं कोष्णोदकेन च ।
क्वचित्तैलं न गृह्णीयान्न बिल्वं कारवेल्लकम् ।।११।।

वार्त्ताकिं शफरी (रीं) चिञ्चां त्यजेद्या (द्व्या-) याममैथुनम् ।
मद्यं सन्धानकं हिंगुं शुण्ठी (ण्ठीं) माषान् मसूरि (र-) कान् ।।१२।।

कूष्माडं राजिकां कोपं कांजि (कांजिकं) चैव वर्जयेत् ।
त्यजेदयुक्तनिद्रां च कास्य (कांस्य-) पात्रे च भोजनम् ।।१३।।

ककारादियुतं सर्वे (र्वं)त्यजेच्छाकफलादिकम् ।
ग्राह्योऽयं लोकनाथस्तु शुभनक्षत्रवासरे ।।१४।।

पूर्णातिथौ शुक्लपक्षे जाते चन्द्रबले तथा ।
पूजयित्वा लोकनाथ कुमारी (रीं) भोजयेत्ततः ।।१५।।

दानं दद्याद् द्विघटिकामध्ये ग्राह्यो रसोत्तमः ।
रसाचजायते (रसाच्चेज्जायते) तापस्तदा शर्करया युतम् ।।१६।।

सत्वं गुडूच्या गृह्लीयाद् वंशरोचनया युतम् ।
खर्जूर दाडिमं द्राक्षा-मिक्षा (मिक्षु-) खण्डानि चानयेत् (चारयेत्)।।१७।।

अरुचौ निस्तुषं धान्यं घृतभृष्टं सशर्करम् ।
दद्यात्तथा ज्वरे धान्यगुडूचीक्वाथमाहरेत् ।।१८।।

उशीरवासकक्वाथ (थं) दद्यात्समधु शर्करम् ।
रक्तपित्ते कफे श्वासे कासे च स्वरसंक्षये ।।१९।।

अग्निभृष्टजयाचूर्णं मधुना निशि दीयते ।
निद्रानाशे दती (द्यती-)सारे ग्रहण्यां मन्दपावके ।।२०।।

सौवर्चलाभयाकृष्णाचूर्णमुष्णजलैः पिबेत् ।
शूलेऽजीर्णे तथा कृष्णा मधुमुक्ता (युक्ता) ज्वरे हिता ।।२१।।

प्लीहोदरे वातरक्ते छर्प्रो (छर्द्यां) चैव गुदाङ्कुरे ।
नासिकास्रुतरक्ते च रसं दाडिमपुष्पजम् ।।२२।।

दूर्वायाः स्वरसं नस्ये प्रदद्याच्छर्करायुतम् ।
कोलमज्ज (मज्जा) कणा बर्हिपक्षभस्म सशर्करांम् (रम्) ।।२३।।

मधुना लि (ले-) ह्येच्छर्दिहिक्काकोपस्य शान्तये ।
विधिरेष प्रयोज्यस्तु सर्वस्मिन्पोट्टलीरसे ।।२४।।

मृगाङ्क हेमगर्भे व मौक्तिकाख्ये रसेषु च ।
इत्ये (त्य)-यं लोकनाथाख्यो रस: सर्वो (सर्व)-रुजो जयेत् ।।२५।।

टीका:— शुद्धपारौ वुभुक्षुतु टं २५ गंधकु टं ५० (मूल में टं २५ ही है) कजली कीजौ । कीडी (कौडी) टं १०० वांटि छाणि कपराकै (मूल पाठ में उक्त कज्जली को पीली कौडियों में भरने का आदेश है) सुहागी (गा) टं २५ (मूल पाठ में टङ्कण का तोल पारद से आधा है) गाइ को क्षीर मर्दीजौ दि (दिन) ३ (दिन ३ टीकाकार की कल्पना है) पश्चात् बाधौ छाण्यो संखुचूर्ण टं २००, सर्व उषध एकत्र कारि खरलीयौ । गौ के दुग्ध महि दिन ३ चंदिया सी करि सुकैजौ (मूल पाठ का आशय यह है कि कज्जली भरी पूर्वोक्त कौडियों के मुख दूध में पिसे उक्त सुहागे के कल्क से बंद करें । तत्पश्चात् चूने से लींपे एक शराव में ८ भाग शंख के टुकड़ों के बीच में कौडियों को जमा कर ऊपर चूने से पुता दूसरा शराव ढक कर विधिवत् कपरौटी करें ।)

ता पश्चात् द्वौ सहनक आनिहि चूनौ लेप दीजौ । सरवा सं ८ (शंख ८ भाग) पुट मध्य च दीया धरीयौ जौ सकौ जो । ता पश्चात् खाडो खोदीजौ अरने छाना मे-लि तरहरिता मध्य सरवा धरीजौ । आस-पास और उपर छाना अरनो । गजपुट समस्त राति दीजौ प्रहर ४ और न दीजौ । स्वांगशीतल भये प्रभात लेइ । (उक्त सम्पुट को १ हाथ प्रमाण गजपुट में देवे व स्वाङ्गशीतल होने पर निकाल कर सुरक्षित रखलें—यही लोकनाथ रस है ।)

गुण औषध कौ—चिहुनी ६ (६ गुञ्जा) चूर्ण मिरच २९ वांटि मेलीजौ । गौ का घृत स्यौं दीजौ वातु जाई । नौनी स्यौ दीजै पित्तु जाई । मधु स्यौ श्लेष्मा जाइ ।

अतिसारु छई अरु छई अरुचि, ग्रहणी, अर्श, मंदाग्नि, अफारा, कास, स्वास, गुलमु जाई मधु स्यौ दीजौ । जव दुपहर जीवने बैठौ तव कौर तीन घी महिं चहोकी खाई उचत ही न खाई घरी २ दिन चढौ पहर सु खाई । दधि न खाई ।। (इस रस का सेवन कर ३ ग्रास घी और भात देकर थोडी देर तक तकिया रहित शय्या पर चित्त सुलावे ।)

जांगल मांसु लवा, तीतरु, बटेरु, हिरण के मांसु षरहा मांसु धृत में रांधीजौ दूध सहित भातु दीजौ संध्या कह घी के वरा कीजौ मूंग के। घी स्नानु करौ। तेल वर्जनीक, तातो पानी न्हाई। घी स्यौं चुपडो। वेलु करेला, कुम्हेडो, ककारादि सत्र छाड़ो। वायाम, मैथुन छाडौ, पीपरि सोंठ, उडद, मसूरी, और न खाई।

ज्वर कह गुडूची धनिया के क्वाथ सौं दीजौ, रक्त पित्त, कफ कह स्वास, कास, स्वरक्षय, उसीर वासौ को क्वाथु मधुशक्कर स्यौं दीजौ। रक्तपितु जाई। निद्रानाश अतीसारु ग्रहणी कह सौंचरु—लौंनु, हरड, पीपरी चूर्ण स्यौं दीजौ। उपर तातो पानी पीवौ शूल जाइ। पीपरि मधु स्यौं दीजौ ज्वर जाई। दान्यौ? (अनारपुष्प ?) के रस सौं दूब के रस सौ दीजौ नाशिका रक्त जाई। छर्दिकह मधु स्यौं दीजौ। इति लोकनाथरसु॥

(अम्लरहितघृतयुक्त अन्न, मधुर दही, घृतपक्व जंगली पशु-पक्षियों का मांस व दूध भात पथ्य है। अग्नि प्रदीप्त होने पर सन्ध्या को घी में तले मूंग के बड़े देवें। घी युक्त तिल और आंवले के कल्क से अथवा केवल घी से मालिश कर मामूली गरमजल से स्नान करें। तैल, बिल्व, करेला, बेंगन, मछली, इमली, व्यायाम, मैथुन, मद्य, अचार आदि, हींग, सौंठ, उडद, मसूर, कोहला, राई, क्रोध, कांजी, अयोग्य निद्रा, कांसी के बर्तन में भोजन, ककारादि शाक व फल छोड़ दें। शुभ नक्षत्र, वार, अक्षयतिथि, शुक्लपक्ष, और चंद्रबल देख कर लोकनाथ की पूजा करे, कुमारिकाओं को भोजन करावे, दान दे व फिर इस रस का सेवन प्रातः काल के वाद दो घड़ी दिन चढने के पहले पहले करना चाहिये। यदि इसके सेवन से कोई उपद्रव हो तो उपचार इस प्रकार करेः—

दाह हो तोः—गिलोय सत्व व वंशलोचन व मिश्री का सेवन दूध से करे। अथवा वंशलोचन, मिश्री, गिलोयसत्व, खजूर, अनार, दाख, ईख का रस इनके कल्क में जल मिला कर पीवें।

अनुपानः— १. अरुचि में चांवल व धनिया को घी में भून कर व मिला कर लें।

२. ज्वर में:—धनिया व गुडूची क्वाथ से।

३. रक्तपित्त, श्वास, कास, व कफजन्य विकारों में :
उशीर व अडूसापत्र के क्वाथ में मिश्री ।

४. निद्रा नाश, अतिसार, ग्रहणी व मन्दाग्नि मे
सिकी भांग का चूर्ण व मधु मिला कर रात में ।

५. शूल व अजीर्ण में : कालानमक, हरड व पीपर का
चूर्ण उष्णजल से ।

६. जीर्ण ज्वर में मधु+पिप्पली से ।

७. प्लीहा, वातरक्त, वमन, अतिसार व रक्तस्राव में दाडिम
के फूल व दोब का कल्क । इसी कल्क का नस्य
रक्तस्राव में ।

८. छर्दि-हिचकी में : बेर की गिरी, पीपर, मयूरपिच्छ
भस्म व मधु ।

९. ये सारे अनुपान राजमृगाङ्क, मृगांक, हेमगर्भ पोट्टली, व
मुक्ता के योगों में भी उपयोगी हैं। अनुपान भेद से यह
लोकनाथ रस सभी रोगों में उपयोगी है ।

(७) शीतहरो रसः

शुद्धतुत्थकभागैकं द्विगुणं शुद्धतालकम् ।
त्रिगुण गालित चूर्णं कौमारीरसमर्दितम् ॥१॥

मूषामध्ये न्यसेत्कल्कं मृत्तिकागोलके भृतम् ।
शुष्कं गजपुट दद्याच्चतुर्यामात्समुद्धरेत् ॥२॥

द्विगुञ्जः शर्करोपेतः शीतज्वरहरो रसः ॥

इति शीतहरो रसः❋

टीका:— एक भाग शुद्धतुत्थ, २ भाग शुद्ध हरताल को कुमारीरस से मर्दन कर
तिगुने चूने के चूर्ण के बीच में रख कर मूषा में रखे व गीली मृत्तिका

---

❋ योगोऽयं ह. पुस्तके [illegible] ।

के गोले में उसे भर दे व गजपुट (भूधर पुट) दे कर चार याम के पश्चात् स्वाङ्गशीतल होने पर निकाल कर रख छोड़े। इस रस की मात्रा २ रत्ती (रोगी के बलाबल के अनुसार न्यून भी) है व अनुपान शर्करा है। इससे शीतज्वर नष्ट होता है।]

(८) मानिनीमान मर्दनरसः[1]

कज्जली-गन्धसूताभ्यांतुल्य-मन्मत (मुन्मत्त)-बीजकम् ।
तत्तैलमर्दितं सेव्यं द्विवल्लं ससितं नृणाः ।।१।।

मेहौघं नाशयेत्सर्वे (र्वं) स्तम्भकृद्द्रावयेत् स्त्रियम् ।
रसः कामप्रदो नृणां मानिनीमानमर्दनः ।।२।।

इति मानिन मानमर्दनरसः

[टीकाः—शुद्ध पारद-गंधक की कज्जली के बराबर धतूरे के बीज मिलाकर धतूरे के बीजों के तैल से मर्दन कर दो वल्ल (छः रत्ती) मिश्री के साथ लेने से सभी प्रमेहों का नाश होता है व स्तम्भन होता है। यह मानिनीमानमर्दनरस पुरुषों को कामप्रद होने से कारण मानिनियों का मान मर्दन करने वाला है।]

वक्तव्यः—छ रत्ती की मात्रा इस युग के अनुरूप नहीं है।

(९) शीतभञ्जीरसः[2]

रस-हिङ्गुल-गन्धं च जैपालं मर्दिते (तं) त्रिभिः ।
दन्तीक्वाथेन सङ्ग ह्य (सम्मर्द्य) रसो ज्वरहरः स्मृतः ।।१।।

आर्द्रकस्य रसेनाथ दापयेद्रक्तिकाद्वयम् ।
नवज्वरं महाघोरं नाशयेद्यामभात्रकम् ।।२।।

शर्करादधिभक्तं च पथ्यं देयं प्रभाततः (प्रयत्नतः) ।
शीततोयं पिबेच्चानु इक्षु-मुहुरसो (मुंद्गरसं) हितम् ।।३।।

---

1-2 एतौ योगौ ख. पुस्तके पृष्ठाभावात् नोपलभ्यतः ।

शीतभञ्जीरसो नाम्ना सर्वज्वरकुलान्तकः ।।

इति शीतभञ्जीरसः

[टीका: – शुद्धपारद, शुद्ध हिंगुल, शुद्ध गंधक समभाग व दंतीबीज सब के बराबर लेकर दंतीक्वाथ की भावना से ज्वरहर यह योग विधिवत् तैयार करें। अद्रक रस के साथ इसकी २ रत्ती की मात्रा देनी चाहिये। यह महाघोर नवज्वर का शमन याममात्र ही में कर देता है। शक्कर, दही व भात का पथ्य यत्न से देना चाहिये। ऊपर शीतलजल व इक्षुरस व मुद्गरस पीना हितकर है। यह शीतभंजी नामक रस सभी ज्वरों का नाश करता है।]

(१०) उदकमञ्जरी

नवज्वरविनाशाय[1] वक्षा-(वक्ष्या-) म्युदकमञ्जरीम् ।
रस-गन्धौ[2] समौ स्यातां मरिचं तत्समं क्षिपेत् ।।१।।

टङ्कणस्य समं[3] भस्म शर्करा सर्व-सम्मता ।
भावना मत्स्य[4]-पित्तस्य मर्दयेद्दिवसत्रयम् ।।२।।

आर्द्रकस्य[5] रसेनायं दीयते वल्लमात्रकम्[6] ।।

टीकाः— सुधपारौ ।। सुध गंधक ।। सममात्रा ।। इन समान मिरच ।। सर्वसमान अष्ट सुहागौ ।। सब ही ते समान मिश्री ।। रोहू मत्स्य के पित्त की भावन ।। दिन ३।। मिश्री बिन भावन दीजै । मिश्री पाछे तैं मिलाजे। आदे के रस स्यौं दीजै रती ३ नव ज्वर जाहि[7] ।

---

1 ख. विनासै 2 ख. रांधौ 3 ख. टंकणसमं 4 ख. मत्स 5 ख. आइकस्य 6 ख. बलमात्रकं 7 घ. पुस्तक में टीका नहीं मिलती। वृ. यो. त., र. क. ल., टो., भै. र., भा. प्र व यो. र. में पारद-गंधक-टंकण व मरिच प्रत्येक समभाग व मिश्री सब के बराबर कही गई है। टो. में तिमिंगिल मछली के पित्त की भावना कही गई है। कतिपय पूर्वाचार्यों ने 'शर्करा' का अर्थ 'विष' इस योग में बताया है—यथा—'शर्करा अत्र विषम्'।

## (११) चिन्तामणिरसः

द्वे[1] ऽजाज्यौ कणविश्वपञ्चलवणं मारीचगन्धाभ्रकं,
※त्रिक्षारं सुरसेन्द्रम[2]र्द्धममृतं [3]तत्सर्वमेकीकृतम्[4]※ ।

+[5]देयञ्चार्द्रकनाग[6]वल्लिसहितं मन्दाग्निश्लेष्मानिले ?+
⊕सामे सज्वर[7]सन्निपातविषमे मोहे [8]ह्युदावर्तके⊕ ॥१७॥

[9]चूर्णं चास्य हि[9] पञ्चगुञ्जमुदितं[10] लोकोपकारैर्बुधैः ॥

टीका:— जीरो । कालोजीरौ । त्रिकटु । सौंधौं । सौंचलु । विडु । समडी । सांभरि । गंधकु । अभ्रक । साजी । जौखार । सुहागौ । पारौ । एती औषध मात्रा समान । विषु अर्धमात्र । एकत्र करि चूर्ण कीजै । रती ५। आदे के रस (आदे व पान के रसों से) के अनूपान सौं दीजै । इति चिन्तामणि रस ।×

## (१२) ज्वराङ्कुशो रसः

खण्डितं हरिणशृङ्गं ज्वालामुख्या रसैः समम् ।
रुद्धा (रुद्ध्वा) भांण्डे पचेचुल्हं (पचेच्चुल्यां) यामयुग्मं ततो नयेत् ॥१॥

अष्टांशं त्र्यूषणं दद्यान्निष्कमात्रं च भक्षयेत् ।
नागवल्लीरसैः सार्द्धं सर्वज्वरकुलापहः ॥२॥

एष ज्वराङ्कुशो नाम रसः सर्वरसोत्तमः ॥

---

1 ख. द्वोजाजी 2 ख. मर्द्ध 3 ख. तत 4 ख. कृतं ※-※ र.क.ल. 'त्रिक्षारं च समं पृथग् विषरसात्रर्धार्धं भागौ तथा' इति पाठः; अनेन द्वे जाजीतः त्रिक्षारपर्यन्तद्रव्याः समाः; पारदः विषश्चार्द्धार्द्धं भागौ ॥ 5 ख. दतं 6 ख. नागवली +-+ 'देयञ्चाद्रक……… श्लेष्मानिले' अस्मिन्स्थाने र. क. ल. "क्षिप्त्वा चाद्रकनागवल्लिजरसं बद्धा त्रिगुञ्जावटी ।" इति पाठः ॥ 7 ख. सानिपात 8 ख. उदावर्तनो ⊕-⊕ 'सामे सज्वर. …… ह्युदावर्तके' अस्मिन्स्थाने र. क. ल. "सामे सज्वरसान्निपातिकमहामेहाद्युदावर्तके ।" इति पाठः । 9-9 ख. चूर्णायं रसं 10 ख. गदितो 11 ख. लोकोपचारोबुधं ॥
× पाठोऽयं घ. पुस्तके नोपलभ्यते ।

टीका:— चूर्णीभूत हिरण को शृङ्ग ।। ज्वालामुखी खासनी के कृष्ण खासनी कै रस सानींजै । आठवें हिस्से त्रिकटु मेलहीजै । टं १ पान सौं दीजै सर्वज्वर जाइ ज्वरांकुसो नाम रस ।।

विधि:— अन्य ग्रंथों के अनुसार हरिणशृङ्ग के छोटे छोटे टुकड़े करके अथवा चूर्ण करके ज्वालामुखी के रस से भावित करें व सूखने पर डमरुयन्त्र में रख कर २ याम तक पाक करें। स्वाङ्ग शीतल होने पर यन्त्र को खोल कर कृष्ण वर्ण की भस्म प्राप्त करें। ऐसी भस्म इस योग में होनी चाहिये । 'असकृद् भावितं शृङ्गं हारिणं कुट्टितं रसैः । ज्वालामुख्याः पचेद्भाण्डगतं तद्भस्म चूर्णयेत् ।।' ज्वालामुखी को कुछ विद्वान 'खसनी बूटी' कहते हैं, कतिपय विद्वान 'भल्लातक' व अन्य इसे 'बिछुआ घास' कहते हैं । श्री हरिप्रपन्नजी ने इसे 'अग्निशिखा'—जलजांभुल (म.) कहा है । ज्वालामुखी के चार भेद हैं । 'शुक्ला पीता तथा रक्ता कृष्णा ज्वालामुखी भवेत् ।।'

### (१३) अर्द्धनारीनटेश्वर-रसः

पारद ?—(दाद् ?) द्विगुण शीशं वङ्गञ्चेति प्रलेपयेत् ? ।
सर्वस्मिन् (सर्वस्माद्) द्विगुणं गन्धं विषान् ? मरिचमष्टधा ? ।।१।।

निम्बबीजं त्रिकटुकं देवदाली सराजिका ।
पारदं गन्धकञ्चेति समभागं विचूर्णयेत् ।।२।।

कारवेल्लरसेनाथ निर्गुण्ड्यास्तु पुनः पुनः ।
भावये-देजनाजस्य ?(दंजनादक्ष्णो ?) गच्छेदर्द्धाङ्गजोज्वरः ।।३।।

द्वितीया-त्त्यंजना ? (क्ष्यञ्जना ?-) चूर्णं ? (त्तूर्ण)-मर्द्धोऽपि स विनश्यति[1] ।।

टीका:— पारौ टं १ सीसा टं १[2] वंग टं १[2] गंधकु टं[2] १० (?) पारौ गंधक कुं एकत्र कज्जली कृत्वा सीसा बंग कज्जली एकत्र करि कवची जंत्र गज-

---

1 अस्पष्टोऽयं योगः । अस्माभिरत्र अविकलरूपेण प्रदिष्टः । 2 मूल पाठ में गंधक सब से दुगना कहा गया है । शीशा व बंग २-२ टं. हों तो गंधक १० टं. होगा ।

पुट करि ? पकाईजौ विषु[1] टं १ (?) मरिच टं १ (?) निंबोली टं १ त्रिगडू टं ३ देवदाली फल टं १ राई टं १ पारौ टं १ गंधकु टं १ कजली कीजौ और सब उषध एषकठी (इकठ्ठी) कपराछान कीजौ। कारवेली (करेला) के रस पुट ७ दीजौ (मूल पाठ में निर्गुण्डी भी है।)

इत्यर्द्धनारीनटेश्वर-अञ्जनम्

(१४) रविसुन्दर

पारौ टं २ गंधकु टं २ विषु टं २ अजेपालु टं ६ नीव ५ ? पत्र रसु[2] पुट २१ दीजौ सर्षप प्रमाण वटी २ २ खाइ प्रभात भक्षे ते विषमज्वर जाई। इति रविसुंदररसः।

(१५) मृत्युंजयो रसः[3]

गौमूत्र स्यौ सोध्यौ विषु, शुद्ध गंधकु शुद्ध पारौ मछली रोहू को पीतौ छेरी (बकरे) को पीतौ मोर को पीतौ भैंस को पीतौ सर्व समान मात्रा छैरी को मूत्र मर्दीजौ दिन ३ उरद प्रमाण वटी कीजाही आदै के रस स्यौ वरी (?) (वटी ?) एक दीज्यौ विषमज्वर जाई उदर रोग पीनस अजीर्ण मूर्च्छा श्लेष्म-ज्वर सौजौ कमलवाउ पाण्डुरोग सन्निपात प्रस्वेद सर्व रोग याति, मूर्च्छित मनुष्यु पड्यौ होई सु चेतौ। दधि पथ्य दीजौ, सीरौ ? (शीतल ?) पाणी पाइजौ। पेटकृमि जाहि निर्मल काया होई।

(१६) सन्निपातार्णव रसः[4]

अपामार्ग-ठिठिवणी (?) रणी (?) सेहुण्डकं तथा।
रक्तशाकं (?) गृहैत्यैषां ? (गृहीत्वैषां) क्षाराण च पृथक् पृथक् ॥१॥

टङ्काणि पञ्च चां (?) (पञ्चा ऽथ पंचे (पञ्च) हि लवणं पलम् ॥१॥
सुधा दशपल मूत्रैर्गवां यन्त्रेण श्रा[1]- स्रा-) वयेत् ॥२॥

पश्चात्क्षारं त्वपः (?) (क्षारजल) पात्रे वह्ना ? (ह्नौ) यत्नेन शोषयेत्।
पारदं गन्धकं तुत्थं चोकं च नवसादरम् ॥३॥

---

1 मूल पाठ 'विषान् मरिचमष्टधा' अस्पष्ट है। आगे का पाठ भी अस्पष्ट है।

2 ख. नींब पत्र रस पुट 7 दीजै। 3 योगोऽयं ख. पुस्तके नोपलभ्यते।

4 अस्पष्टाशयोऽयं योगः।

